August & September. 1934.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO'S. 440 & 441.

# श्राद्धकल्पलता

श्रीनन्दपण्डितकृता ।

काशीस्थ–धर्माधिकारिपाठशालाध्यक्षेण

पण्डित श्रीलक्ष्मीधरपन्तधर्माधिकारिणा

संशोधिता ।

# SRĀDDHA KALPALATĀ

BY

S'RĪ NANDA PANDITA

*Edited by*

PANDITA S'RI LAKS'MĪDHARA PANTA

DHARMĀDHIKARĪ

FASCICULUS II–III. २–३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE

*Benares City.*

1935

THE
CHOWKHAMBĀ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
No's 416, 440 & 441.

THE

# ŚRĀDDHAKALPALATĀ

By

DHARMĀDHĪKARĪ
S'RĪ NANDA PANDITA

*Edited by*

PANDIT S'RĪ LAKS'MĪDHARA PANTA
DHARMĀDHĪKARĪ

*With*

*Introduction and Index Etc.,*

*by*

PANDIT GOPAL S'ĀSTRĪ NENE
Professor, Govt. Sanskrit College,
Benares.

FASCICULAS I–III. १-३

PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series Office,*
*BENARES,*

1935.

चौखम्बा–संस्कृत–ग्रन्थमाला

ग्रन्थ–संख्या ७३

ग्रन्थाङ्कः ४१६, ४४०, ४४१.

॥ श्रीः ॥

# श्राद्धकल्पलता

श्रीमन्महाराजाधिराज-सहागिलवंशावतंस-परमानन्दादेशेन
धर्माधिकारि-श्रीनन्दपण्डित-विरचिता ।

काशिकराजकीयसंस्कृतपाठशालायां व्याकरण-धर्म-
शास्त्र-वेदान्ताध्यापक पं० श्री नेने गोपालशास्त्रि-
प्रदर्शितरीतिमनुसृत्य–धर्माधिकारि
पं० लक्ष्मीधरपन्तेन संशोधिता ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।

१९९२



श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४१६. ४४०. ४४१.


प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः

**चौखम्बा संस्कृत सीरिज आफिस**

बनारस सिटी ।

श्रीगुरुःशरणम् ।

श्री एकवीरादेव्यै नमः ॥

# प्रास्ताविकम् ।

अथेदानीं धर्माधिकारिकुलावतंस श्री विनायकापराभिध श्री नन्दपण्डितकृतः श्राद्धकल्पलतानामकोऽयं धर्मशास्त्रनिबन्धः संमुद्रय प्रकाश्यते।

यद्यप्ययं प्रथमत आदर्शपुस्तकद्वयमादायैव मुद्रापयितुं प्रारब्धः । तदुभयमेतत्पुस्तकसम्पादकमहोदयानां श्रीधर्माधिकारिकुलावतंस श्रीमद्गुरुवर-काशीस्थराजकीय संस्कृतपाठशालायां व्याकरणधर्मशास्त्राध्यापक नागेश्वरपन्त तनूजानां सुगृहीतनामधेयानां श्रीलक्ष्मीधरपन्तानां तदीयपुस्तकालयगतमेव वर्तते ।

तत्रैकं सम्पूर्णं त्र्यधिकशतद्वयपत्रोपेतं, प्रतिपृष्ठं नवपङ्क्तयः प्रतिपङ्क्ति च प्रायशस्त्रिंशदक्षरोपेतं वर्तते । तत्र 'श्रीगणेशायनमः ॥ समालम्बे लम्बोदर' इत्यादिना प्रारब्धं इति श्राद्धकल्पलता समाप्ता ॥ सम्वत् १६५९ वर्षे कार्तिकसुदि ९ गुरौ पुस्तकं लिपीकृवान् ॥ शुभमस्तु । श्रीरामोजयति ॥ श्रीपरमात्मने नमः ॥ संख्या ४००० ॥' इति ग्रन्थकेन समाप्तम् । तदिदं प्राचीनं पुस्तकं नागराक्षरलिखितं कर्गलमयं शुद्धं 'ग' संज्ञया संकेतितम् ।

द्वितीयं च तृतीयपत्रमारभ्य त्रिसप्ततितमपत्रपर्यन्ततया सप्ततिपत्रात्मकं खण्डितं प्रतिपृष्ठं प्रायशो द्वादशपङ्क्त्युपेतं प्रतिपङ्क्ति च पञ्चाशदक्षरयुतं नातिशुद्धं वर्तते । तस्य प्रारम्भः—'पार्वणांशे पार्वणेनैकोद्दिष्टांशे एकोद्दिष्टेन समत्यिर्थः' इति । समाप्तिश्च 'तदेवं स्वयं होमाशक्तौ सपिण्डस्यान्यस्य वा अभावे आकृष्योत्कृष्य वा होमः' इति ग्रन्थकेन तदिदं नागरलिपिलिखितं कर्गलमयं 'घ' नाम्ना संकेतितम् ।

तृतीयं पुस्तकं च प्रयागक्षेत्रवासि धर्माधिकारिकुलप्रसूत-वैदिकमूर्धन्य-कर्मकाण्डनिष्णात सम्पादकगोत्रज श्रीजयकृष्णपन्तेभ्यः समासादितं पञ्चाशीत्युत्तरशतपत्रात्मकं प्रतिपृष्ठं प्रायशो दशपङ्क्त्युपेतं प्रतिपङ्क्ति च प्रायः षड्विंशत्यक्षरसमलंकृतं मध्यममानेन नागराक्षरैर्लिखितं 'ख' नाम्ना संकेतितं नातिशुद्धं वर्तते । इदमपि सम्पूर्णम् ।

चतुर्थं पुस्तकं सम्पूर्णमेकोनपञ्चाशदधिकैकशतपत्रात्मकं प्रतिपृष्ठं नवपङ्क्तिविराजितं प्रतिपङ्क्ति प्रायोऽष्टत्रिंशदक्षरोपेतं सम्पादकगोत्रजश्रीमा·

त्रावशिष्टगृहस्थस्त्रीनिधनानन्तरं तदीयसहोदरभ्रातुष्पुत्रेण रामडोकरोपाह्वेन वैदिकप्रवरेण श्री वीरेश्वरभट्ट शर्मणा बाबू भट्टशर्मणा च समर्पितं बालबोधलिपिलिखितं सूक्ष्माक्षरं नातिनवीनं 'क' संकेतेन संकेतितम् ।

अस्य प्रारम्भः—'श्रीगणेशाय नमः ॥ श्रीएकवीरायैनमः ॥ समालम्बे लम्बोदरचरणपङ्केरुहयुगम्' इति समाप्तिश्च 'इति श्री महाराजाधिराजसहगिलान्वयैकभूषणपरमानन्दादिष्ट धर्माधिकारिरामपण्डितात्मजपण्डितविनायककृतायां श्राद्धकल्पलतायां नवश्राद्धनिरूपणस्तबकपञ्चमः समाप्तः ॥ ५ ॥

इति श्राद्धकल्पलता समाप्ता ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥ १ ॥
भग्नपृष्ठकटिग्रीवस्तब्धदृष्टिरधोमुखम् ।
कष्टेन लिखितं ग्रन्थं यत्नेन परिपालयेत् ॥ २ ॥
तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् ।
मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ॥ ३ ॥

सम्वत् १८३२ मिती पौष शुक्ल २ रवौ तद्दिने इदं पुस्तकं······ पण्डितः लिखितं स्वार्थं परार्थं च ॥ लेखकपाठकयोः शुभमस्तु । ग्रन्थ संख्या ४००० श्रीजगदम्बार्पणमस्तु ॥ इति । अस्मिन् पुस्तके पञ्चचत्वारिंशदधिकैकशतविषयाणामनुक्रमः पृथक् पत्रद्वये सन्निवेशितो वर्तते।

तदेवं पुस्तकचतुष्टयमादाय तत्र तत्र विशेषत उपलभ्यमानपाठभेदांश्च तत्तत्पुस्तकीयत्वेनाधस्ताट्टिप्पण्यां सन्निवेश्य महता परिश्रमेण सम्पादकमहोदयैः सम्पादितं पुस्तकं सर्वेषां विद्वन्मूर्धन्यानां सन्तोषजनकं भवेदित्याशास्महे ।

एतत्पुस्तकरचयितुः श्रीनन्दपण्डितस्य परिचयो धर्माधिकारिवंशवर्णने स्पष्टतरमभिहितः समयानुसारेणाऽस्माभिरपि तद्वर्णनं करिष्यते इति तद्विषयकायासादत्रोपरम्यते ।

---

गवर्नमेण्ट संस्कृत कालेज
बनारस
मि० वैशाखशु० १५ सं०१९९२

भवतां निवेदको
गोपाल शास्त्री नेने

श्रीगुरुःशरणम् ।

# श्राद्धकल्पलता–विषयानुक्रमः—

इति श्री श्राद्धकल्पलताविषयानुक्रमः ।

# श्राद्धकल्पलता शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| जवाधीरताः | जवधीरिताः | ३ | ६ |
| पित्रुदेशेन | पित्रुद्देशेन | ३ | १३ |
| स्वीकण | स्वीकरणं | ३ | २२ |
| फलमुखेनाऽह | फलमुखेनाऽऽह | ३ | २२ |
| योग्याः | योग्या | ५ | ११ |
| पुसंवनचव | पुंसवने चैव | ७ | १६ |
| चोच्छसे | चोत्सने | ९ | १३ |
| पितुरवति | पितुरेवेति | १३ | २३ |
| रेवाऽधिरः | रेवाऽधिकारः | १४ | २७ |
| विशेषण | विशेषेण | १५ | ५ |
| [ सौमिके | [ सौमिक | १५ | १६ |
| अष्टम्यान्वष्टक्यं | अष्टम्यन्वष्टक्यं | १८ | १६ |
| तृतीयाया | तृतीयायां | २० | २६ |
| समवाऽप्नु | समवाऽऽप्नु | २१ | १७ |
| नामनि | नामनी | २४ | २७ |
| समोरुह्यं | समारुह्य | २५ | २ |
| ननु | ननु | २२ | २० |
| तद्भक्तवै | तद्भक्तया | २६ | १० |
| पत्युक्षये | पत्युःक्षये | २६ | १४ |
| स्मान्मृते | स्यान्मृते | २७ | ९ |
| कार्याकार्यऽनि | कार्याऽकार्यनि | २७ | १३ |
| अधिराजे | अधिराज | ३४ | १३ |
| तद्भर्ता | तद्भर्त्रा | ३७ | ८ |
| क्लीबेभदा | क्लीबमेदा | ४२ | १६ |
| अनधियानस्य | अनधीयानस्य | ४३ | ३ |
| विपनेन | विपणेन | ४३ | ६ |
| सम्बन्धैः । पतितैः | सम्बन्धैः पतितैः | ४३ | ६ |
| समुदायार्थी | समुद्रयायी | ४४ | १ |
| शढः | शठः | ४६ | १२ |
| निमन्त्रयत | निमन्त्रयेत | ४७ | १ |
| व्यावाये | व्यवाये | ५० | १८ |
| रूकमपि | मरूषकमपि | ५६ | ५ |
| मूतृण | भूतृणं | ५७ | २५ |
| दुह्याना | दुह्यमाना | ६० | १२ |
| अनिर्देशा | अनिर्दशा | ६० | १३ |
| जविनार्थं | जीवनार्थं | ६३ | ६ |
| यान्युच्यते | यान्युच्यन्ते | ६४ | २ |
| दाहित्रपदं | दौहित्रपदं | ६५ | १ |
| विकलं | विफलं | ६६ | १ |
| मण्डले | मण्डलम् । | ६६ | १३ |
| निरूपणम्ः । | निरूपणम् । | ६७ | १ |
| प्रदापंयेत् । | प्रदापयेत् । | ६९ | १२ |
| गन्धामा | गन्धमा | ७० | २३ |
| प्रशहता | प्रशस्ताः | ७१ | ६ |
| अर्कपुपुष्पम् | अर्कपुष्पम् | ७१ | २१ |
| परिवेशन | परिवेषण | ७४ | ४ |
| देवान् धरतोर्ध्वं | देवानधश्चोर्ध्वं | ७७ | ११ |
| मनन्योन्य | मन्योन्य | ७९ | १६ |
| निषिद्धोः | निषिद्धाः | ८४ | २४ |
| उक्तेऽत्रिणा | उक्तोऽत्रिणा | ८४ | २५ |
| निषिद्धी | निषिद्ध | ८६ | २४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| दग्वाऽप्रदक्षिणम् | दग्वाप्रदाक्षिणम् | ९० | १९ |
| उपस्थितैवितु· | उपस्थित्तपितुः | ८४ | २१ |
| सर्वंत्रै | सर्वत्रै | ९४ | २२ |
| नभस्याऽपरः | नभस्यस्याऽपरः | ९६ | १५ |
| शन्नादिना | शस्त्रादिना | १०५ | १८ |
| दिष्टेन | द्विष्टेन | १०५ | २० |
| पितुणां | पितॄणां | १०७ | ४ |
| आमश्वाद्धा | आमश्राद्धा | १११ | २१ |
| प्रदर्शनार्थां· | प्रदर्शनार्थाः | ११२ | २२ |
| अमावास्याऽदौ | अमावास्यादि | ११३ | १४ |
| दवि बदरा | दधिबदरा | ११८ | १० |
| चापराम् । | चापरम् । | १२३ | ८ |
| पावण | पार्वण | १२५ | हेडिङ्ग |
| आहुय | आहूय | १२५ | ३ |
| गायत्री | गायत्रीं | ,, | १६ |
| पनैरेषा | पनैरेखा | ,, | १८ |
| सूत्रद्वान | सूत्रदान | ,, | २२ |
| पिण्डाच्चर्य | पिण्डाच्चर्यां | ,, | २३ |
| येअभिदग्वा | ये अभिदग्धा | १२८ | १६ |
| निष्पक्ष | निष्पक्षे | १२९ | १ |
| पैठिनसि | पैठिनसिः | ,, | ६ |
| पितृसन्तांप | पितॄन्सन्तर्प | १३४ | ९ |
| निणयः | निर्णयः | | |
| समथनैं | समर्थेन | १३९ | १५ |
| कादाचन | कदाचन | १४० | १८ |
| प्रायाश्चत्त | प्रायश्चित्त | १४१ | ११ |
| ब्राह्मणर्हताः। | ब्राह्मणैर्हताः | १४३ | २ |
| भृगवग्न्यानाश | भृगवग्न्यनाश | ,, | ८ |
| मान्त्यकर्मं | मन्त्यकर्म | १४७ | हेडिङ्ग |
| निसि | निर्ण० सिं० | १४७ | २४ |
| त्यप्रेतनैने | त्यप्रेतनेन | १४८ | २ |
| और्ध्वदेदिक | और्ध्वदेहिकं | १४९ | २७ |
| ब्रते | ब्रूते | १५२ | २१ |
| कथञ्चिदिन्वा | कथञ्चिदन्वा | १५५ | ३ |
| दृष्टवा | दृष्ट्वा | १५७ | ११ |
| माचष्ठ | माचष्टे | १५८ | १ |
| निःक्रमणं | निष्क्रमणम् | १५९ | २३ |
| मृतिकां | मृत्तिकां | १६० | २३ |
| कौपानिकान्न | कौपीनकान्न | १६१ | १ |
| मान्त्रिता । | मन्त्रिताः । | १६६ | २६ |
| त्यदि | यदि | १७० | २४ |
| मायुष्मन्तीं | मायुष्मतीं | १७१ | ४ |
| कुर्यादिप्सितांश्च | कुर्यादीप्सितांश्च | ,, | ४ |
| निर्यापदेश | निर्वापदेश | १७३ | हे० |
| देवतायनं | देवतायतनं | ,, | २५ |
| षोडषकं | षोडशकं | १७५ | १० |
| अनुपनीतापिण्ड | अनुपनीतपिण्ड | १७७ | हे० |
| अनुपनीतै | अनुपनीत | ,, | २१ |
| तदोर्ध्व | तदौर्ध्व | १७९ | १६ |
| सप्तध | सप्तधा | १८२ | ६ |
| शुद्धर्भवति | शुद्धिर्भवति | ,, | ८ |
| विचक्षणः । | विचक्षणाः । | ,, | ९ |
| स्पर्षदोषो | स्पर्शदोषो | ,, | ११ |
| नवमाभि | नवममभि | | |
| नवश्राद्धं कुर्यात् । नवमदिनकर्तव्यं नवश्राद्धं यद्यन्तरित | नवश्राद्धं यद्यन्तरितं | १८३ | २१ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| नवव | नववै | १८४ | २७ |
| दशमै | दशमे | ,, | २७ |
| दशे | दश | ,, | २७ |
| मनसी | मानसी | १९२ | २ |
| यपदार्थे | यपादार्थ | १९३ | ६ |
| जाह्नव्या | जाह्नव्याः | १९९ | २८ |
| सलिलेतिस्थः | सलिले-स्थितः | ,, | २८ |
| शुद्धिर्लेपैने | शुद्धिर्लेपेन | २०३ | ३ |
| समापतेत् । | समापयेत् । | २०६ | २५ |
| पिण्डा | पिण्डाः | २०९ | २० |
| मास | मासे | ,, | २६ |
| एकदशे | एकादशे | २१० | १४ |
| एकोदिष्ट | एकोद्दिष्ट | २११ | २४ |
| वस्तुनि | वस्तूनि | २१३ | १६ |
| मोचयद् | मोचयेद् | २१४ | १६ |
| प्यर्थवत्सरम् । | प्यर्धवत्स-रम् । | २१९ | १० |
| श्राद्ध | श्राद्धं | २२० | १९ |
| संवादाद्ध | संवादादद्ध | २२२ | २० |
| ऽअनग्निस्तदा | ऽनग्निस्तदा | २२३ | ४ |
| दाहिताग्निर्यै | दाहिताग्निर्यै | २२३ | १२ |
| आहिताग्निः | आहिताग्नेः | ,, | २४ |
| निमित्तन | निमित्तेन | २२६ | ८ |
| कालेषू | कालेषु | ,, | २६ |
| मन्यते | मन्वते | २२७ | १७ |
| वचदर्शनात् । | वचनदर्श-नात् । | २२९ | १५ |
| माह्लिकं | माह्निकं | २३१ | ६ |
| श्रत्वा | श्रुत्वा | ,, | १९ |
| तस्माद | नस्याद | ३४३ | २ |
| ह्कोद्दिष्ट | देकोद्दिष्ट | ,, | ६ |
| माचारानगतं च | माचारानु-गतं च | २४७ | २५ |
| बहुनाः । | बहुना । | २५१ | ७ |
| सपिण्ड्याग्ते-स्याद्धं | सपिण्ड्यन्ते-द्धं | २५४ | ६ |
| अपदार्थत्वात | ऽपदार्थत्वात् | ,, | २४ |
| कत्यायनीये | कात्यायनीये | २५५ | १ |
| परमेव' | परमेव, | २५६ | ५ |
| भ्युपगमाभावा-देवन | भ्युपगमवा-देन | ३५६ | २९ |
| तदूर्द्धं | तदूर्द्धं | २५८ | १३ |
| बहिश्राद्धं | बहिः श्राद्ध | २५९ | ८ |
| तदूर्द्धं | तदर्द्धं | ,, | १६ |
| नन्दकीर्त्यां | नन्दः कीर्त्या | २६१ | १३ |

शुद्धिपत्रं समाप्तम् ।

श्रीगुरुः शरणम्

श्रीनन्दपण्डितकृता

# श्राद्धकल्पलता

श्रीएकवीरायै नमः ॥

समालम्बे लम्बोदरचरणपङ्केरुहयुगं
यदालम्ब्य स्वैरं विजहति च विघ्नान्धतमसम् ।
स्मरन्तः सन्तो यन्निरुपधिपरानन्दलहरी-
समाक्रान्तस्वान्ता हरिहरविरिञ्चिप्रभृतयः ॥ १ ॥
अपूर्वं तद्वन्दे किमपि रमणीयाकृतिमहो
महिम्नां सर्वस्वं तरणितनयातीरनिलयम् ।
सकेलिकौतुकस्तनभरविनम्राभिरभितः
परीतं गोपीभिः स्तुतमनिशमिन्द्रादिभिरपि ॥ २ ॥
प्रणयसकलकोपावेशगुप्तप्रसादां
सविनयमनुनीय प्रीतिपूर्वं पुरारौ ।
वदति कलहबीजं किञ्चिदुन्निद्रपद्म-
प्रतिमवदनहासः पातु गौरीविलासः ॥ ३ ॥
अस्ति प्रशस्तैर्विभवैः समस्तैः
समस्तभूमण्डलमण्डनं यत् ।
साधारणं नामपुरं पुरारे-
र्मुदे मुरारेरपि यद्दिवोऽपि ॥ ४ ॥
समजनि जनतायाः प्राणसाधारणोऽस्मिन्
सहागिल इति नाम्ना कोऽपि वंशः प्रसिद्धः ॥ ५ ॥

यमधिजनिमिवैकां देवदेवोऽपि विष्णु
विंबुधकुलसमेतोऽद्यापि वाञ्छत्यवाप्तुम् ॥ ५ ॥
अखण्डभूमण्डलमण्डनेऽस्मिन्
प्रतापसन्तापितसप्तसप्तिः ।
दयामयान्तःकरणो बभूव
स सिंहमल्लः प्रथितः पृथिव्याम् ॥ ६ ॥
प्रतापपरितापितप्रबलभूमिपालावली-
शिरोमणिमरीचिभिः प्रविलसत्पदाम्भोरुहः ।
समस्तसुरसुन्दरीसततगीतकीर्तिस्ततो
वसावनमहीपतिः समजनि क्षमामण्डले ॥ ७ ॥
यत्तेजःपुञ्जतप्ता दिनकररुचयः शेरते शर्वरीषु
प्रायः पाथोधिमध्ये रजनिकरकलालाञ्छनं बिभ्रतीमाः ।
कीर्त्या यस्याऽभिभूतास्त्रिजगति गतया भूतलं भासयन्त्या-
ऽभूत्तस्मादस्तशत्रुः सहागिलतिलको रूपचन्द्रः क्षितीन्द्रः॥८॥
निजकुलजनताचकोरचन्द्रो बुधजनकैरवहृत्प्रबोधचन्द्रः ।
कविकुलकवितासुधाब्धिचन्द्रो जगति बभूव नृपस्तु रूपचन्द्रः॥९॥
जातः क्षत्रियवंशकैरवसमुद्बोधे सुधांशुस्ततो
दाने देवतरोरपि प्रतिदिनं सम्पादिता न्यूनता ।
शौर्ये पाण्डवकर्णमुख्यमहसामासादिता हीनता
येनाऽसाविह धैर्यधामपरमानन्दो महेन्द्रः क्षितौ ॥१०॥
लक्ष्मीर्यत्करुणाकटाक्षनिवहे पाणौ सुपर्वद्रुमो
वक्त्रे शीतकरः स्मिते नवसुधा क्रोधे च हालाहलम् ।
दृष्टान्तः प्रथमश्च विक्रमनिधेर्गाम्भीर्यमर्यादयो-
स्ताद्विग्नः करुणामयेन विहितः पूर्णो हि रत्नाकरः ॥११॥
श्रीरामपण्डितसुतः पण्डितः श्रीविनायकः ।
आदिष्टस्तेन तनुते श्राद्धकल्पलतामिमाम् ॥ १२ ॥

गोविन्दपण्डितकृतामवलम्ब्याऽतियत्नतः ।
श्राद्धकल्पलतामेतां कुर्वे तां श्राद्धदीपिकाम् ॥ १३ ॥
श्राद्धकल्पलता सेयं परमानन्दकारिता ।
विदुषामर्थसन्देहे विदधातु चमत्क्रियाम् ॥ १४ ॥
नो मूलस्मृतयो न वाऽन्यकृतयः सन्तन्यमाने मया
ग्रन्थेऽस्मिन्नवधीरिताः किमपि वा वाक्यञ्च पौराणिकम् ।
तस्मादत्र बुधाः सुधांशुधवले नापाततो दूषणं
देयं, बुद्धिबलाद्विचार्य सकलं तत्त्वं, ततस्तुष्यताम् ॥१५॥

इह खलु धर्मार्थकाममोक्षाणामुपायान्तरसाध्यत्वेऽप्यलसप्राय-कलिकलुषकलङ्कपङ्कमग्नदेहैः पुरुषैरनायासेन तेषां साधयितुमशक्यत्वादवश्यकर्तव्यश्राद्धमात्रस्यैव तत्साधनत्वेन तन्निर्णीयते ।

तत्राऽऽदौ श्राद्धलक्षणम्—

"पित्रुद्देशेन श्रद्धया त्यक्तस्य द्रव्यस्य ब्राह्मणैर्यत्स्वीकरणं तच्छ्राद्धम्" ।

अत एव ब्रह्माण्डपुराणेऽपि —

पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥ इति ।

अत्र च दानस्य स्वसत्तानिवृत्तिपूर्वकपरसत्तापादनरूपत्वेन ब्राह्मणस्वीकारपर्यन्तो व्यापारो गृह्यते ।

अथ श्राद्धप्रशंसा चन्द्रिकायां कूर्मपुराणे—

श्राद्धात्परतरन्नास्ति श्रेयस्करमुदाहृतम् ।
तस्मात्सर्वप्रयत्नेन श्राद्धङ्कुर्याद्विचक्षणः ॥

याज्ञवल्क्योऽपि फलमुखेनाऽऽह—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ [१-२७०]

अथ ये नास्तिका मृतानां पित्रादीनां प्रातिस्विकशुभाऽशुभकर्मवशेन स्वर्गनरकादिषु तत्तद्योनिषु वा गतानां श्राद्धकरण-

मनर्थकमाहुः, तन्निराकरणं तावत् क्रियते । किं विध्यभावाद्वा श्राद्धकरणमनर्थकमुत फलाभावादुत पित्रादीनां तृप्त्यसिद्धेः ?
न तावदाद्यः,

तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः ।

इत्यादिविधिदर्शनात् । न द्वितीयः,

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।

इत्यादिफलश्रवणात् । न तृतीयः,

नह्यत्र देवदत्तादय एव श्राद्धकर्मणि सम्प्रदानभूताः पित्रादिशब्दैरुच्यन्ते, किन्त्वधिष्ठातृवस्वादिदेवता सहिता एव । यथा देवदत्तादिशब्दैर्न शरीरमात्रं, नाप्यात्ममात्रं, किन्तु शरीरविशिष्टाः प्राणिन एवोच्यन्ते । एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते । अतश्चाऽधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनाऽन्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति, कर्तॄंश्च पुत्रादिफलेन योजयन्ति । यथा माता गर्भपोषणायाऽन्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमपत्यं तर्पयति, दोहदान्नप्रदायिनश्च प्रत्युपकारफलेन संयोजयति तद्वद्वसुरुद्रादित्याः पितरः पितृपितामहप्रपितामहशब्दवाच्या न केवलं देवदत्तादय एव । तदेते श्राद्धदेवताः श्राद्धकर्मणि सम्प्रदानभूताः श्राद्धेन तर्पिताः सन्तो मनुष्याणां पितॄंस्तर्पयन्तीति । तदेतत्सर्वं मार्कण्डेयपुराणे स्पष्टीकृतम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥
लेपसम्बन्धिनश्चान्ये पितामहपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥
तथाऽन्ये पूर्वजाः स्वर्गे ये चाऽन्ये नरकौकसः ।
ये च तिर्यक्त्वमापन्ना ये च भूतादिसंस्थिताः ॥

तान्सर्वान्यजमानो वै श्राद्धं कुर्वन्यथाविधि ।
समाप्य यजते वत्स येन येन शृणुष्व तत् ॥
अन्नप्रकिरणं यच्च मनुष्यैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥
यदम्बुस्नानवस्त्रोत्थं भूमौ पतति पुत्रक ।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥
यास्तु गन्धाम्बुकणिकाः पतन्ति धरणीतले ।
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः ॥
उद्धृतेषु तु पिण्डेषु याश्चान्नकणिका भुवि ।
ताभिराप्यायनं तेषां ये तिर्यक्त्वं कुले गताः ॥
येचाऽदन्ताः कुले बालाः क्रियाऽयोग्या ह्यसंस्कृताः ।
विपन्नास्ते तु विकिरसंमार्जनतिलाशिनः ॥
भुक्त्वा चाचमनं यच्च जलं यच्चाङ्घ्रिसेचने ।
ब्राह्मणानां तथैवाऽन्ये तेन तृप्तिं प्रयान्ति वै ॥
तेनाऽनेककुले तत्र तत्तद्योन्यन्तरं गताः ।
प्रयान्त्याप्यायनं वत्स सम्यक्श्राद्धक्रियावताम् ॥
यथा गोषु प्रनष्टां गां वत्सो विन्दति मातरम् ।
नामगोत्रस्वधामन्त्राः पितॄणाम्प्रापकास्तथा ॥
नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः ।
नाममन्त्रास्तथा देशा भवान्तरगतानपि ॥
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ।
देवो यदि पिता जातः शुभकर्मानुयोगतः ॥
तस्याऽन्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ।
मर्त्यत्वे भोज्यरूपेण पशुत्वे च तृणम्भवेत् ॥
श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति ।
पानं भवति यक्षत्वे गृध्रत्वे च तथाऽऽमिषम् ॥

दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ।
मानुषत्वेऽन्नपानादि नानाभोगकरं तथा ॥

अकरणे दोषोऽप्यादित्यपुराणे—

न सन्ति पितरश्चेति कृत्वा मनसि वर्तते ।
श्राद्धन्न कुरुते यस्तु तस्य रक्तं पिबन्ति ते ॥

कूर्मपुराणेऽपि—

अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ।
वायुभूताः प्रपश्यन्ति श्राद्धं वै पितरो नृणाम् ॥
यावदस्तमयम्भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चाऽस्तङ्गते भानौ निराशा दुःखसंयुताः ॥
निःश्वस्य सुचिरं यान्ति गर्हयन्तः स्ववंशजम् ।
जलेनाऽपि च न श्राद्धं शाकेनाऽपि करोति यः ॥
अमायां पितरस्तस्य शापं दत्वा प्रयान्ति च ।

मार्कण्डेयेऽपि—

न तत्र वीरा जायन्ते नाऽऽरोग्यं न शतायुषः ।
नच श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥

अथ श्राद्धभेदाः । तत्र विश्वामित्रः—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणश्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशम्प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ इति

एतल्लक्षणानि भविष्यपुराणे—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुग्मान् भोजयेद्द्विजान् ॥

कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वम्प्रदक्षिणङ्कार्यं पूर्वाह्णे तूपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इतिद्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावास्यां यत्क्रियते तत्पार्वणमिति स्मृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ॥
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयम्पुंसवने चैव श्राद्धङ्कर्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यच्च श्राद्धङ्कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते ॥

वृद्धिः पुत्रजन्मविवाहादिः । नित्येनावश्यकेनैकोद्दिष्टेन पार्वणेन च तुल्यं शेषमङ्गजातं स्यात्, सपिण्डीकरणस्योभयात्मकत्वात् । पार्वणांशे पार्वणेनैकोद्दिष्टांशे एकोद्दिष्टेन सममित्यर्थः । "एकोद्दिष्टं स्त्रिया अपि" इत्येकोद्दिष्टं सपिण्डीकरणमेवोक्तम् । प्रसङ्गात्

स्त्रीसम्बन्धेनाऽपि उभयात्मकस्यैकदेशेन निर्देशः। "क्रियते वा पर्वणि" इति पर्वशब्दः संक्रान्त्यादिपरः, अमावास्यायाः पूर्वमुक्तत्वात्।

वृद्धवसिष्ठः—

प्रतिपर्व भवेद्यस्मात्प्रोच्यते पार्वणन्तु तत्।
तच्च त्रिपुरुषोद्देशेन स्यात्।

अथ श्राद्धाऽधिकारिणः। शङ्खः—

पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।
पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः॥

गौतमः—

"पुत्राऽभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ"।

अत्र शङ्खवचनाऽनुरोधेन पुत्राऽभावे पत्नी तदभावे सपिण्डाः, इति क्रमः।

पुत्राश्च द्वादशविधा औरसादयः।

तत्र याज्ञवल्क्यः—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः।
दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत्॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः॥
दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः।
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः॥
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः। (२।१२८-१३२)

एते पुत्रप्रतिनिधयो युगान्तरे ग्राह्याः। कलौ तु दत्तौरसावेव

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।
इतिकलिवर्ज्यप्रकरणे चन्द्रिकायां निषिद्धत्वात्।

स्मृतिसङ्ग्रहेऽप्युक्तम्—

पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च।
पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा॥
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा।
असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः॥ इति।

विष्णुपुराणे—

पुत्रः पौत्रः प्रपौत्रश्च तद्वद्भ्रातृसंततिः।
सपिण्डसन्ततिर्वाऽपि क्रियाभाक् नृप जायते॥
तेषामभावे सर्वेषां समानोदकसन्ततिः।
मातृपक्षसपिण्डेन सम्बद्धो यो जनेन वा॥
कुलद्वयेऽपि चोच्छन्ने स्त्रीभिः कार्या क्रिया नृप।
तत्सङ्घातगतैर्वाऽपि कार्या प्रेतस्य संस्क्रिया॥

शङ्खः—

भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च।
श्वश्र्वादेश्च स्नुषा चैव तदभावे तु सोदरः॥

एतदपि पुत्राद्यभावविषयम्।

सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्।
इतिवचनात्।

मार्कण्डेयपुराणे—

सख्युरुत्सम्बन्धोश्च सखाऽपि, श्वशुरस्य च।
जामाता स्नेहतः कुर्यादखिलम्पैतृमेधिकम्॥ इति।
सर्वाऽभावे तु नृपतिः कारयेत्तस्य रिक्थतः।
तज्जातीयेन वै (१)सम्यग्दाहाद्यास्सकलाः क्रियाः।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः॥ इति।

(१) 'वैषम्यात्' ख. 'वै साम्या' क.।

स्कन्दपुराणेऽपि—

सर्वाऽभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम् ।
पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥

औरसोऽनुपनीतोऽपि पित्रोर्मातापित्रोरौर्ध्वदेहिकङ्कुर्यात् ।

तदाह मनुः—

न ह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।(२-१७१)
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ इति । (२-१७२)

स्वधानिनयनं प्रेतकर्म ।

सुमन्तुरपि—

नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः ॥ इति ।

अन्ये तु (१)क्षेत्रजादिपुत्रभ्रातृतत्पुत्राश्च संस्कृता उपनीताः श्राद्धकारिणः स्युः, औरसग्रहणसामर्थ्यात् । किं पुत्रो जन्मनः प्रभृत्यधिकारी ? इत्यतआह स एव—

चौलादाद्याब्दिकादर्वाङ् न कुर्यात्पैतृमेधिकम् ।

प्रथमवार्षिकचूडाकरणात्पूर्वं पैतृमेधिकन्न कुर्यात् ॥

तदाह सुमन्तुः—

पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात् ।
पितरन्नाब्दिकाच्चौलात्पैतृमेधेन कर्मणा ॥

नन्वसौ मन्त्रेण कुर्यान्नाऽमन्त्रकमित्याह स एव—

तृतीयवत्सरादूर्ध्वं मन्त्रवत्तत्समाचरेत् ।

अनुपनीतस्तृतीयवत्सरादूर्ध्वं तत्पैतृमेधिकङ्कर्म मन्त्रवन्मन्त्रयुक्तमाचरेत् । तृतीयवत्सरादित्येतच्चौलोपलक्षकम् ।

तदाह सुमन्तुः—

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ॥

---

(१) 'क्षेत्रजाद्याः' क. ख. ग.

"न ह्यस्मिन्युज्यते" इति यन्मनुवचनम्, 'नाऽभिव्याहारयेद्" इति यत्सुमन्तुवचनं, तद्द्वयं तृतीयवर्षकृतचूडाविषयम् ।

यत्तु—

कुर्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम् ॥ इति,

तदपि तृतीयवर्षकृतचूडाविषयम् । यत्तु—

कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥

इति स्मृतिसंग्रहकारवचनम्, तत्(१) प्रथमवर्षकृतचूडाविषयम् । नन्वनुपनीतः कृत्स्नं मन्त्रवत्कुर्याद् उतैकदेशमित्यत आह—

असंस्कृतश्च पत्नी च यथाविध्येव मन्त्रवत् ।

अनुपनीतः पत्नी च-यद्यत्कर्म मन्त्रवत्कुर्यादिति विहितं, तत्तदेव मन्त्रवत्कुर्यात् ।

तदाह कात्यायनः—

असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् ।
कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥ इति ।

मनुः—

पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम् ।

स्कन्दपुराणे—

यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथाविधि ।
तदौर्ध्वदेहिके सा हि मन्त्रार्हा धर्मसंस्कृता ॥ इति ।

यत्तु--

सर्वाऽभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् ।

तद्धर्म्यासुरादिविवाहोढास्त्रीविषयम् ।

तथाच शातातपः--

धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता ।
सहाऽधिकारिणी ह्येषा यज्ञादौ धर्मकर्मणि ॥

---

(१) 'तद्वयं' क. ख. ग.

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे च पित्र्ये स्याद्दासीं तां मुनयो विदुः ॥

ननु ब्रह्मचारी कथमौर्द्ध्वदेहिकमाचरेद् व्रतभङ्गादित्यत आह—

मातापित्रोरुपाध्यायाऽऽचार्ययोरौर्ध्वदेहिकम् ।
कुर्वन्मातामहस्याऽपि व्रती न भ्रश्यते व्रतात् ॥

मन्त्रात्मकस्य ब्राह्मणस्य वा वेदैकदेशस्य वेदाङ्गानां वा अध्यापयिता उपाध्यायः । उपनयनमात्रङ्कृत्वा साङ्गवेदाऽध्यापयिता आचार्यः । मात्रादीनामौर्ध्वदेहिकं कुर्वन् व्रती ब्रह्मचारी व्रताद् उपनयननिमित्तभैक्षाचरणादिव्रतान्न भ्रश्यते भ्रष्टो न भवति ।

तदाह याज्ञवल्क्यः—

आचार्यपित्रुपाध्यायान्निर्हृत्याऽपि व्रती व्रती । (३-१५) इति ।

भविष्यपुराणे—

व्रतस्थोऽपि यथा पुत्रः पितुः कुर्यात् क्रियां नृप ।
तथा मातामहस्याऽपि दौहित्रः कर्तुमर्हति ॥

अत्र दौहित्रशब्देन पुत्रीकृतो विवक्षितः ।

यत्तु कात्यायनवचनम्—

अपुत्रायाः पतिर्दद्यात्सपुत्रायां न कुत्रचित् ।
न पुत्रस्य पिता दद्यान्नाऽनुजस्य तथाऽग्रजः ॥

यच्च बौधायनवचनम्—

पित्रा श्राद्धन्न कर्तव्यं पुत्राणां वै कथञ्चन ।
भ्रात्रा चैव न कर्तव्यं भ्रातॄणाञ्च कनीयसाम् ॥ इति,

तदधिकारिपुत्रादिसद्भावविषयं स्नेहविहीनविषयं वा ।

बौधायनः—

यदि स्नेहेन कुर्वीत सपिण्डीकरणं विना ।
गयायान्तु विशेषेण ज्यायानपि समाचरेत् ।

असत्यधिकारिणि पित्रादिभिरपि कर्तव्यम् ।

तदुक्तं सङ्ग्रहे--

उच्छन्नबान्धवं प्रेतं पिता भ्राताऽथवाऽग्रजः।
जननी वाऽपि संस्कुर्यान्महदेनोऽन्यथा भवेत्॥

बीजिक्षेत्रिणोर्विषये मरीचिः---

स्वगोत्रे वाऽन्यगोत्रे वा यो भवेद्विधवासुतः।
पिण्डश्राद्धविधानञ्च क्षेत्रिणः प्राग्विनिर्वपेत्॥
बीजिने तु ततः पश्चात्, क्षेत्री जीवति चेत् क्वचित्।
बीजिने दद्युरादौ च मृते पश्चात्प्रदीयते॥

पुत्रिकापुत्रश्राद्धे विशेषमाह मनुः--

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः।
द्वितीयं तु पितुस्तस्यास्तृतीयमपि (१)तत्पितुः॥ (९-१४०)

तस्य मातामहस्य पितुः (?) प्रपितामहस्येत्यर्थः। मातामह एव हि पुत्रिकापुत्रस्य पिता।

अभ्रातृकां प्रयच्छामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति॥

इति स्मृतेः।

उशनाः—

मातामहं तु मात्रादि पैतृकं पितृपूर्वकम्।
मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मतः।

विशेषमाह ऋष्यशृङ्गः—

यस्मादुभयसम्बन्धी पुत्रिकायास्सुतो ह्यसौ।

एतदुत्पादकस्य पितुः पुत्रान्तराऽभावे ज्ञेयम्। पुत्रवति तु जनके मातामहस्यैवांशहरस्तर्पणश्राद्धादिप्रदो न पितुरेवाति ... पुनर्धनहारी दौहित्रस्तेन अवश्यं नवश्राद्धाद्यपि कर्तव्यम्।

मातामहं नवश्राद्धमवश्यं धनहारिणा।
दौहित्रेणाऽर्थनिष्कृत्यै कर्तव्यं विधिवत्सदा॥

---

(१) 'तृतीयं तत्पितुः पितुः' मनुपुस्तके।

आदेहपतनात्कुर्यात्तस्य पिण्डोदकक्रियाम् ।

पतितस्य दाहोर्ध्वदेहिकश्राद्धादौ विशेषो वसिष्ठेनोक्तः—

पतितानां न दाहः स्यान्नान्त्येष्टिर्नाऽस्थिसंचयः ।
नचाश्रुपातः पिण्डश्च कार्यं श्राद्धादिकं क्वचित् ॥
एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचाऽन्यथा ॥

पतिते पितरि पितामहश्राद्धं कार्यमित्युक्तं षट्त्रिंशन्मते—

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तु वै सुतः ॥ इति ।

पतिते पितरि जीवति मृते चैतत्समानमेव हेमाद्रौ—

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥ इति ।

अत्राऽपरो विशेषो दिवोदासप्रकाशे देवलेनोक्तः—

माता म्लेच्छत्वमापन्ना पिता वाऽपि कदाचन ।
न श्राद्धं सूतकञ्चैव इत्येवं देवलोऽब्रवीत् ॥
पितरं विष्णुमुच्चार्य तदूर्ध्वञ्च पितामहम् ।
तृतीयञ्च ततो ब्रूयात्पिण्डान् दद्यात्पृथक् पृथक् ॥

त्रयाणां मध्ये एकोऽपि चेन्म्लेच्छत्वमापन्नस्तदा तस्य स्थाने विष्णोरुच्चारः । एवं मात्रादीनामप्यूहनीयमिति ।

अथ जीवत्पितृकश्राद्धाऽधिकारनिर्णयः । तत्र कात्यायनः—

सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥

अत्राऽपवादो मैत्रायणीयपरिशिष्टे—

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ।

एते षट् काला इत्यर्थः । केचिदुद्वाहोऽत्र द्वितीयादिः, प्रथमोद्वाहे पितुरेवाऽधिरः । तदुक्तम्—

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥

इत्याहुः; तन्न, प्रथमोद्वाहेऽपि पितुर्जीवत्पितृकत्वेन पुत्रोद्वाहप्रयुक्तश्राद्धानधिकारप्रसङ्गात् । तस्मादुद्वाहप्रयुक्तं नान्दीश्राद्धं यस्य यदा प्राप्तं तेन तदा कर्त्तव्यमित्यविशेषण विधीयते, सङ्कोचकाभावात् । तच्च प्रथमे पितुरेव प्राप्तमिति तस्याऽपि जीवत्पितृकत्वे भवति । द्वितीयादौ तु पुत्रस्यैवेति तस्याऽपि जीवत्पितृकत्वे भवत्येव तदिति यथास्थितमेव साधीय इति । परिशिष्टचन्द्रिकायान्तु प्रथमविवाहस्य संस्कारत्वाद् द्वितीयविवाहे न श्राद्धम् । अत एव ब्रह्मपुराणे—

सर्वे विद्याव्रतस्नाता विवाह्या ब्राह्मणादयः ।

इत्यभिधाय—

नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्यमृद्धये ।
ततो विवाहः कर्तव्यः शुद्धः शुद्धसुतप्रदः ॥

इति स्नातकस्यैव विवाहाङ्गश्राद्धकर्तव्यतोपदेशादित्युक्तम् । पित्र्येष्ट्यां चातुर्मास्येषु तथा पिण्डपितृयज्ञे च । सौमिके मखे सोमादौ पुरोडाशात् पिण्डदाने च ।

मनुः—

ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।
विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् ॥ (३–२२०)
पिता यस्य तु वृत्तः स्याज्जीवेच्चाऽपि पितामहः
पितुः स नाम सङ्कीर्त्य कीर्त्तयेत्प्रपितामहम् ॥ (३–२२१)
पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः । (३–२२२)

पूर्वेषां पितामहादीनाम् । पितुः स नाम सङ्कीर्त्य अस्मात्पितुः पितामह इति स्वप्रपितामहनाम पिण्डदानादिषु गृह्णीयादित्यर्थः ।

भविष्यपुराणे—

जीवमाने न देयं स्याद्यस्माद्धरतसत्तम ।

तस्माज्जीवत्पिता कुर्याद् द्वाभ्यामेव न संशयः ॥

विष्णुः—

"पितरि जीवति यच्छ्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां कुर्यात्। पितरि पितामहे च जीवति येषां पितामहः। पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य पिता प्रेतःस्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्" इति।

जीवत्पितृकेन आश्विनशुक्लप्रतिपदि मातामहश्राद्धमवश्यकर्तव्यम्।

तदाह श्राद्धप्रदीपे गौतमः—

जातमात्रस्तु दौहित्रो विद्यमानेऽपि मातुले।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥ इति।

श्राद्धकमलेऽपि—

गर्भच्युतोऽपि दौहित्रः कुर्यात्पितरि जीवति।
श्राद्धं मातामहानाञ्च पक्षान्तादपरेऽहनि ॥
मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषां वै पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ॥

(इयं शुक्ला प्रतिपत् सङ्गवव्यापिनी ग्राह्येति निर्णयदीपे उक्तम्—

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम्।
श्राद्धं मातामहं कुर्यात् सपिता सङ्गवे सति ॥ इति।
जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले।
प्रातःसङ्गवयोर्मध्ये यदा तु प्रतिपद् भवेत् ॥ इति वचनात्।

अत्र सपितेतिवचनाज्जीवत्पितृक एवाधिकारी। अत एव

पिण्डरहितं कुर्यात्। "मुण्डनं पिण्डदानं च" इति दक्षवचनात्, अन्वष्टक्यविशेषवचनाच्च।

जीवत्पितृकस्याऽऽभ्युदयिके कर्माणि निर्णयविशेष उच्यते।

सायणीये--

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥

चन्द्रिकायां कात्यायनस्तु—

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याऽभावे तु तत्क्रमात्॥

अस्याऽर्थः। सुतसंस्कारकर्मसु जातकर्मादिषु तेषां सुतानां आ उद्वहनात् विवाहपर्यन्तं पिता स्वपितृभ्यः पिण्डान्दद्यात् वृद्धिश्राद्धं कुर्यात्। तस्याऽभावे तु तेषां कर्तॄणां जातकर्मादिसंस्कारकर्मसु—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।

इत्यादिवचनात् यो गम्यमानः क्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिः स्वपितृभ्यो दद्यादिति। समावर्तनस्याऽपि विवाहप्राचीनसुतसंस्कारत्वात् समावर्तनेऽपि पितैव स्वपितृभ्यो दद्यात्। अजीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसम्भवे स्वयमेव स्वपितृभ्यो दद्यात्। उपनयनेन कर्माऽधिकारस्य जातत्वात्। विवाहेऽप्येवमेव द्रष्टव्यमिति। तस्याऽभावेतु तत्क्रमादित्यंशस्य हेमाद्रिकृता व्याख्या लिख्यते। पित्रभावे अन्यो यः कश्चित् संस्कारं कुर्यात् स तत्क्रमात् तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमः तेन क्रमेण (१)दद्यान्नतु स्वकीयेभ्यः पितृभ्य इत्यर्थः स्थापितो निगमवाक्येन। तस्मात्पितृव्याऽऽचार्यमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युर्न स्वपितृभ्यः इति अत्रपारमार्थिकः पक्षो विधीयते इति।

---

(१) क्रमेण क्रमेण इति 'क' पुस्तके पाठः।

वृद्धिश्राद्धाकरणे प्रत्यवायो वृद्धशातातपेनोक्तः—

वृद्धौ न तर्पिता ये वै तर्पिता गृहमेधिभिः ।
तद्दानमफलं सर्व्वमासुरो विधिरेव सः ॥ इति ॥

अथ श्राद्धकालाः । तत्र याज्ञवल्क्यः—

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्ति विषुवत्सूर्यसंक्रमः ॥ [ १-२१७ ]
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ [१-२१८]

ब्रह्मपुराणेऽपि—

आषाढ्यामथ कार्तिक्यां माघ्यां मन्वन्तरादिषु ।
युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते ॥
प्रौष्ठपदासिते पक्षे श्राद्धं कुर्वीत यत्नतः ।
मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने ॥
कृष्णपक्षेषु पूर्वेद्युरन्वष्टक्यन्तथाऽष्टमी । इति ।

तिस्रोऽष्टकास्तासु श्राद्धं कुर्वीत पार्वणम् । मार्गशीर्षे मासि तथा पौषे माघे फाल्गुने प्रौष्ठे भाद्रपदे च कृष्णपक्षेषु पूर्वेद्युरष्टम्या-न्वष्टक्यश्चेति तिस्रोऽष्टकास्तासु श्राद्धं कुर्वीत । पूर्वेद्युः सप्तमी, अन्वष्टक्यं च नवमी ।

तदाह शौनकः—

हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्योऽष्टकाः । वृद्धिः पुत्रजन्मादिः । कृष्णपक्षो भाद्रपदाऽपरपक्षः । अयनं दक्षिणोत्तरम् । द्रव्यब्राह्मणयोः श्राद्धार्हयोः सम्पत्तिः प्राप्तिः । विषुवन्मेषतुला-संक्रान्ती । सूर्यसंक्रमः आदित्यस्य राशितो राश्यन्तरगमनम् । अयनविषुवतोः संक्रान्तित्वेनैवोपादाने सिद्धेऽपि पृथगुपादानं फलातिशयप्रतिपादनार्थम् ।

व्यतिपातयोगः शास्त्रान्तरे दर्शितः ।

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।

पाशाभिधाना करभेन युक्ता तिथिर्व्यतीपात इतीह योगः ।

पञ्चाननः सिंहः, गुरुभूमिपुत्रौ बृहस्पत्यङ्गारकौ, पाशाभिधाना द्वादशी, करभं हस्तनक्षत्रम् । गजच्छाया ग्रन्थान्तरे—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणीया च गजच्छायेति सा स्मृता ॥

युगादयो विष्णुपुराणे—

वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥

माघे पञ्चदशी अमावास्या ।

नारदीयपुराणे—

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
कृष्णे पूर्वयुते ग्राह्ये शुक्ले तूत्तरसंयुते ॥

द्वे शुक्ले वैशाखतृतीया कार्तिकनवमी च । द्वे कृष्णे भाद्रपदत्रयोदशी माघाऽमावास्या च ।

अस्मिंश्च गोभूमिहिरण्यवस्त्रदानेन सर्वं प्रविहाय पापम् ।
शूरत्वमिन्द्रस्य सुहृत्त्वमेत्य मर्त्याऽधिपत्वं लभते मनुष्यः ॥

मन्वादयो मत्स्यपुराणे—

अश्वयुक् शुक्लनवमी कार्तिकी द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढस्याऽपि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याऽष्टमी कृष्णा तथाऽषाढी च पौर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ।

यत्र कृष्णेतिविशेषनिर्देशस्तत्र कृष्णैव । यत्र विशेषनिर्देशा-

भावस्तत्र सितैव । (१)अकरणे प्रायश्चित्तमुक्तं ऋग्विधाने—

त्वं भुवः प्रतिमन्त्रश्च शतवारञ्जले जपेत् ।
मन्वादयो यदा न्यूनाः कुरुते नैव वाऽपि यः ॥ इति ।

एवं षण्णवतिश्राद्धान्यपि नित्यानि । तेषामयं सङ्ग्रहः—

अमायुगमनुक्रान्ति धृतिपातमहालयाः ।
अन्वष्टक्यश्च पूर्वेद्युः षण्णवत्योऽष्टकास्तथा ॥ इति ।

सङ्ग्रहेऽपि—

मन्वादिश्च युगादिश्च अमा संक्रातिवैधृती ।
पक्षश्राद्धाऽष्टकापाताः श्राद्धकाला इति स्मृताः ॥

श्राद्धकमले द्विसप्ततिश्राद्धकालाः—

अमावास्या द्वादशैव क्षयाहद्वितये तथा ।
षोडशापरपक्षस्य अष्टकाऽन्वष्टकाश्च षट् ॥
संक्रान्त्यो द्वादश तथा अयने द्वे च कीर्तिते ।
चतुर्दश च मन्वादेर्युगादेश्च चतुष्टयम् ॥
अनन्तिकाश्चतस्रश्च श्राद्धान्येवं द्विसप्ततिः ।
अनन्तिका आषाढीकार्तिकीमाघीवैशाख्य इति ।

कल्पादयो रेवाखण्डे—

वैशाखस्य तृतीया या कृष्णाख्या फाल्गुनस्य च ।
पञ्चमी, चैत्रमासस्य अमावास्या तथा परा ॥
शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी ।
नवमी मार्गशीर्षस्य सप्त कल्पादयः स्मृताः ॥

अत्राऽपि पूर्वपक्षे कृष्णैव, उत्तरत्र शुक्ला इति विवेकः ।

तासु जप्तं हुतं श्राद्धं कृतमक्षयतां व्रजेत् । इति ।

अथ काम्यकालाः । तत्र मनुः—

कुर्वन्प्रतिपदि श्राद्धं सुरूपान् लभते सुतान् ।
कन्यकांतु द्वितीयायां तृतीयाया तु बन्दिनः ॥

---

( १ ) एतावान्ग्रन्थः 'ख' पुस्तके नास्ति ।

पशून् शूद्रांश्चतुर्थ्यां तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतजयं चैव सप्तम्यां लभते कृषिम् ॥
अष्टम्यामपि पाण्डित्यं लभते श्राद्धदः सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूपञ्च राजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु (१)कुप्रजाम् ।
प्रीयन्ते पितरश्चाऽस्य ये शस्त्रेण हता रणे ॥
पक्षत्यादिविनिर्दिष्टान् विपुलान्मनसः प्रियान् ।
श्राद्धदः पञ्चदश्यां तु सर्वान्कामान् समश्नुते ॥

बन्दिनः स्तुतिपाठकाः, स्तुतो भवतीत्यर्थः । द्यूतं द्यूतजयम् । जातरूप्यं हेम । कुप्यं सुवर्णरजतव्यतिरिक्तं ताम्रादि । पक्षतिः प्रतिपत् तदादितिथिष्वभिहितानि यानि फलानि तेषु स्वीयमनसोऽभीष्टान् सर्वान् कामानमावास्याश्राद्धदः प्राप्नोतीत्यर्थः ।

ब्रह्मपुराणे—

अश्विन्यां प्राप्नुयादश्वान् , भरण्यामायुरुत्तमम् ।
कृत्तिकायां विज्वरत्वं श्राद्धकृत्समवाऽप्नुयात् ॥
प्राजापत्ये तथा पुष्टिं, सौम्ये चौजः सुशोभनम् ।
आर्द्रायां तु परां सिद्धिं, पुत्रान् श्रेष्ठान् पुनर्वसौ ॥
पुष्ये सुतान् वरिधर्मान् , सार्प्ये च लभते धनम् ।
ज्ञातिश्रैष्ठ्यं मघास्वेव, भाग्ये सौभाग्यमुत्तमम् ॥
दानशक्तिमथाऽर्यम्णे, हस्ते श्रैष्ठ्यं महर्द्धिमत् ।
त्वाष्ट्रे दुहितरं पुण्यां, स्वातौ वाणिज्यमुत्तमम् ॥
विशाखायां शुभान् पुत्रान् , मैत्रे चाप्यहतां गतिम् ।
ज्येष्ठायामाधिपत्यं तु, मूले (२)चारोग्यमुत्तमम् ॥

---

(१) 'सुप्रजाम्' ख. ग.।
(२) मूले वारेणमुत्तमामिति क. पुस्तके पाठ.।

आषाढासु यशोलाभमुत्तरासु विशोकताम् ।
श्रवणे च गतिं पुण्यां, धनिष्ठासु धनं बहु ॥
वारुणे तु कृषेर्वृद्धिं वैशाखे वार्षिकं बहु ।
बह्वीर्गाश्चोत्तरायाश्च, पौष्णे कुप्यं महानिधिम् ॥
इति संचिन्त्य योगेन विधिना साधयेच्च यत् ।
स तस्मिन्दिवसे श्राद्धे भक्त्या सन्तर्पयेत्पितॄन् ॥

कूर्मपुराणे—

आदित्यवारे त्वारोग्यं, सोमे सौभाग्यमेव च ।
कुजे सर्वत्र विजयं, सर्वान्कामान्बुधस्य तु ॥
विद्यामभीष्टां तु गुरौ, धनं वै भार्गवे पुनः ।
शनैश्चरे लभेदायुरारोग्यं च सुदुर्लभम् ॥

मरीचिः—

कृत्तिकादिषु ऋक्षेषु यदेव फलमीरितम् ।
विष्कम्भादिषु योगेषु तदेव फलमश्नुते ॥

तथाच—

विष्कम्भादिषु योगेषु फलं नक्षत्रवत् स्मृतम् ।
श्राद्धं रव्यादिवारेषु ह्यारोग्यादिफलेप्सवः ॥
कुर्युः, फलमिदं तेषां बवादिकरणेष्वपि ।

बृहस्पतिः—

आरोग्यं चैव सौभाग्यं शत्रूणाञ्च पराजयम् ॥
सर्वान्कामान्श्रियं विद्यां धनमायुर्यथाक्रमम् ।
सूर्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम् ॥ इति ॥

अथाऽमावास्याद्वैविध्ये निर्णयः । तत्र सङ्ग्रहकारः—

दर्शो यत्राऽपराह्णं स्पृशति स दिवसः श्राद्धकालो द्वयोश्चे-
द्यत्राऽनल्पो यदाऽसौ यदि भवति समः क्षीयमाणे तु पूर्वः ॥
वृद्धौ साम्येऽप्यनग्नेर्युवतिवृषलयोश्च श्व, एवाऽऽहिताग्नेः ।
पूर्वो न क्वाऽपराह्णं स्पृशति कुतुपसंस्पर्शतोऽयं विधिः स्यात् ॥

अस्याऽर्थः—दर्शो यत्राऽपराह्णं स्पृशति प्राप्नोति स दिवसः श्राद्धकालः ।

अथ दिनद्वयापराह्णयोर्दर्शस्पर्शे निर्णयमाह–द्वयोश्चेद्यत्रानल्प इति । दिनद्वयापराह्णयोर्दर्शस्पर्शश्चेद् यत्र दिवसे सोऽधिकः स एव श्राद्धकालः । अथ दिनद्वयाऽपराह्णयोर्दर्शसाम्ये निर्णयमाह–यदाऽसौ यदि भवति समः क्षीयमाणे तु पूर्वः । वृद्धौ साम्येऽप्यनग्नेर्युवतिवृषलयो-श्च श्व एवाहिताग्नेः पूर्व इति । असौ दर्शो यदा दिनद्वयापराह्णयोः समो भवति, तदा तिथिह्रासे आहिताग्न्यनाहिताग्नियुवतिवृषलानां पूर्वदिवसः श्राद्धकालः । तिथिवृद्धौ तिथिसाम्ये वाऽनाहिताग्नियुव-तिवृषलाः परेद्युः । आहिताग्नेस्तु पूर्वदिवस एव श्राद्धकालः ।

अथ दिनद्वयाऽपराह्णयोर्दर्शाऽभावे निर्णयमाह । न क्वाऽपराह्णं स्पृशति कुतपसंस्पर्शतोऽयं विधिः स्यादिति । यदा दर्शः पूर्वस्मिन् परस्मिन् वा क्वापि दिवसे अपराह्णं स्पृशति तदा कुतपसंस्पर्शतः। ल्यब्लोपे पञ्चमी, दर्शस्य कुतपकालसंस्पर्शमाश्रित्य अयं विधिः दर्शश्राद्धकालविधिर्ज्ञेयः । कुतपकालप्रशंसा इतिहासे दृश्यते ।

दिवसस्याऽष्टमे भागे यदा मन्दायते रविः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

मत्स्यपुराणे—

ऊर्ध्वं मुहूर्तात् कुतपात् यन्मुहुर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥

ऊर्ध्वञ्चेद्दोष उच्यते तत्रैव—

सायान्हस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥

रात्रिनिषेधस्य क्वचिदपवादमाह विष्णुः—

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥

इत्यमावास्यानिर्णयः । अथ क्षयाहतिथिनिर्णयः । तत्र

सङ्ग्रहकारः—

सायन्तन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके
ग्राह्या सा ह्यपराह्णयोर्यदि तदा यत्राऽधिका सा मता ।
तुल्या चेदुभयाऽपराह्णसमये पूर्वा न चेत्तद्द्वये
पूर्वैव त्रिमुहूर्तगास्तसमये नोचेत्परैवोचिता ॥

अस्याऽर्थः—सायन्तनीति । यदा मृततिथिः सायम् अपराह्णे वा अस्ति । सा तदा आब्दिके मासिके च ग्राह्या स्यात् । सा ह्यपराह्णयोरिति । सा तिथिः उभयत्राऽपराह्णव्यापिनीचेत् तत्र यस्यामपराह्णकालः अधिकः अस्ति सा ग्राह्या । तुल्या चेदिति । उभयत्राऽपराह्णे तिथिः समा चेत् , तदा पूर्वैव । एतत्तिथिक्षयविषयम् । वृद्धौ परतिथिविधानात् । नचेत्तद्द्वय इति । उभयाऽपराह्णे नाऽस्तिचेद् अस्तमयसमये त्रिमुहूर्तगामिनी च यदा भवेत् , तदा पूर्वैव । इति क्षयाहनिर्णयः ।

अथैकचित्यारोहणे क्षयाहनिर्णयः ।

तत्र चन्द्रिकायां भृगुः—

या समारोहणङ्कुर्यात् भर्तृचित्यां पतिव्रता ।
तां मृताऽहनि सम्प्राप्ते पृथक् पिण्डे नियोजयेत् ॥ इति ।

स्मृत्यन्तरेऽपि—

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
पृथक् श्राद्धं तयोः कुर्यादोदनञ्च पृथक् पृथक् ॥ इति ।

ओदनमोदनपिण्डः । यत्तु लौगाक्षिणोक्तम्—

मृताऽहनि समासेन पिण्डनिर्वपणं, पृथक् ।
नवश्राद्धञ्च दम्पत्यो रन्वारोहण एव तु ॥ इति ।

समासेन संक्षेपेण पिण्डनिर्वपणम् । नवश्राद्धन्तु दम्पत्योः पृथक् कार्यम् । स्मृत्यन्तरे—

एकचित्याधिरोहश्चेत्तिथिरेकैव जायते ।
एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनि ॥ इति ।

तदेतत्समासेन पिण्डनिर्वपणमापद्विषयम् । तथाह्याग्निस्मृ-

तिरूपेण—

एकचित्यां समारूढं मृतयोरेकबर्हिषि।

पित्रोः पिण्डान्पृथक् दद्यात्पिण्ड वाऽऽपत्सु तत्सुतः॥

अत्रैकबर्हिषीत्युक्तिविशेषेण पाकैक्यं श्राद्धकालैक्यश्चोपलक्षितम्।

अन्ये तु—

एककाले गताऽसूनां बहूनामथ वा द्वयोः।

तन्त्रेण श्रपणङ्कृत्वा श्राद्धङ्कुर्यात् पृथक् पृथक्॥

चन्द्रप्रकाशे—

एकचितां समारूढौ दम्पती प्रमृतौ यदि।

पृथक् श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि॥

तत्रैव—

मृतानामपि भृत्यानां भार्याणां पतिनासह।

तन्त्रेण श्रपणङ्कृत्वा श्राद्धं स्वामिक्षयेऽहनि॥

पूर्वकस्य मृतस्याऽऽदौ द्वितीयस्य ततः पुनः।

तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः॥ इति।

श्रपणम्प्रदेयान्नपाकः। पूर्वकस्य मुख्यस्य द्वितीयस्य मुख्याऽपेक्षया जघन्यस्य तृतीयस्य जघन्यतरस्येत्यर्थः। पतिमुद्दिश्य कालान्तरे याऽन्वारूढा सा यस्यां तिथावग्निप्रविष्टा तस्यामेव श्राद्धमर्हति, ननु पतिक्षयतिथौ "क्षयाहस्तु क्षयेऽहनि" इति यत्र क्षयः स क्षयाहः। तिथिस्तात्कालिकी ग्राह्या 'तथा मरणजन्मनोः' इतिवचनात्। इति केषाञ्चिन्मतम्। तदयुक्तम्। मरणतिथौ श्राद्धप्रतिपादकवाक्यानामन्वारूढाश्राद्धेतरश्राद्धविषयत्वात्। अत्राऽनुब्रूमः—

आर्ताऽऽर्ते, मुदिते हृष्टा, प्रोषिते मलिना कृशा।

मृते म्रियेत या पत्यौ, सा स्त्री ज्ञेया पतिव्रता॥ इति।

स्वधर्ममनुपालयन्ती या साध्वी कस्माच्चित्प्रतिबन्धकात् प-

तिमरणदिने मरणाऽलाभे ततः प्रागूर्ध्वं वा तमुद्दिश्य तद्भक्त्यै वाऽसून् त्यजति तस्या आब्दिकं पतिक्षयदिन एव युक्तम् । उक्तञ्च—

सहाऽग्रतः पृष्ठतो वा तद्भक्त्या म्रियते यदि ।
तस्याः श्राद्धं प्रदातव्यं पृथक्पत्युः क्षयेऽहनि ॥ इति ।

पत्युः क्षयेऽहनि तस्याः श्राद्धं पृथक् दातव्यमित्यन्वयः । तस्याः क्षयेऽहनीत्यन्वये पत्युः पृथगिति व्यर्थं स्यात् । किञ्च अन्यथाप्राप्ते विधिः स्यात् । तथाच वाक्याऽनर्थक्यमिति । अत्र केचित्–तस्या अन्वारूढाया भर्तुश्च क्षयाऽहनि स्वस्वक्षयाहे पृथक् श्राद्धं प्रदातव्यम् । तेन तत्क्षयाहे तस्याः, पतिक्षयाहे पत्युः नत्वेकस्य भर्तुरेव क्षयतिथावित्यर्थं इत्याहुः । तन्न, क्षयेऽहनीत्यस्य सम्बन्ध्याकाङ्क्षायां तत्पतिशब्दाभ्यां सम्बन्धिसमर्पणे कृते श्राद्धपदेऽपि सम्बन्ध्याकाङ्क्षायां ताभ्यामेव सम्बन्धिसमर्पणे तस्याः श्राद्धं तस्याः क्षयेऽहनीति, पत्युः श्राद्धं पत्युक्षयेऽहनीत्यावृत्तिलक्षणो वाक्यभेदः स्यात् , पृथक्पदे वीप्साप्रसङ्गाच्च । किञ्च एकस्मिन्नेव दिने यदा तिथिद्वयं तत्र च प्रातरेकस्यां तिथौ पत्युर्मरणमपरस्यां चाग्निप्रवेशः स्त्रियाकृतस्तत्र सहगमनेऽपि दिनद्वये श्राद्धप्रसङ्गः । तस्मात् तिथिस्तात्कालिकी' इतिवचनमन्वारूढाश्राद्धेतरश्राद्धविषयम् । तदेतदुक्तं पुराणसमुच्चयेऽपि—

अग्रतः पृष्ठतो वाऽपि तद्भक्त्या म्रियते तु या ।
तस्याः श्राद्धं सुतैः कार्यं पत्युरेव क्षयेऽहनि ॥

यदि दैवादेकदिने पित्रोर्मृतिस्तदा युगपदेवोभयोः श्राद्धं पितृपूर्वकं कार्यं, नतु पितुः श्राद्धं समाप्य पश्चान्मातुरिति । रौहिणाऽतिक्रमे दोषस्मरणात् । इत्येकचित्यारोहणक्षयाहनिर्णयः ।

अथ प्रोषितमृताहनिर्णयः । विश्वादर्शे—

ज्ञातो मासः क्षयाहर्यदि नहि विदितं तर्हि तत्तत्र दर्शे
स्यादज्ञातोनु मासो यदि विदितमहस्तद्भवेन्मार्गशीर्षे ।

माघे वा, प्रस्थितस्य द्वयमनवगतं तर्हि तत्स्याद्द्वयं यत्-
प्रस्थाने, तच्च चेत्तद्भवति, तपसहौ तेऽथवा कृष्णरुद्रे ॥

अस्याऽर्थः—यदि प्रस्थितस्य द्वयं दिनमासमज्ञातम् । तर्हि यत्प्रस्थाने द्वयं तदेव ग्राह्यम् । तदपि न ज्ञातश्चेत्तर्हि माघस्य मार्गस्य वा कृष्णैकादश्यां मृताहश्राद्धं कार्यमित्युत्तरार्द्धे सम्बन्धः । पूर्वार्द्धं तु स्पष्टमेव ।

तथाच वायुपुराणे बृहस्पतिश्च—

न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृतेऽहनि ॥
यदा मासो न विज्ञातो, विज्ञातं दिनमेव तु ।
तदा मार्गशिरे मासे माघे वा तद्दिनं भवेत् ॥

इति प्रोषितमृताह्ननिर्णयः ।

अथ क्षयाहश्राद्धस्य मलमासे कार्याकार्यऽनिर्णयः ।

तत्र सत्यव्रतः—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा ॥ इति ।

अनेन शुद्धमासमृतस्य मलमासे प्रतिसाम्वत्सरिकश्राद्धं न कर्तव्यमित्युक्तम्भवति । यत्तु वृद्धवसिष्ठेनोक्तम्—

प्रतिसंवत्सरे श्राद्धे नाऽधिमासं विवर्जयेत् ।
मलमासेऽपि कर्तव्यं श्राद्धं यत्प्रतिवत्सरम् ॥ इति,

एतन्मलमासमृतविषयम् ।

तथाच पैठीनसिः—

मलमासे मृतानाञ्च श्राद्धं यत्प्रतिवत्सरम् ।
मलमासेऽपि कर्तव्यं नाऽन्येषान्तु कथञ्चन ॥

इति योऽयं प्रतिषेधः, सतु प्रथमाऽब्दिकव्यतिरिक्तविषयः, प्रथमाब्दिकस्य मलमासे वचनबलेन कर्तव्यत्वात् । तथाच

हारीतः—

असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमे द्विजैः । इति ।

स्मृत्यन्तरेऽपि—

आब्दिकम्प्रथमं यत्स्यात्, तत्कुर्वीत मलिम्लुचे ।

त्रयोदशे च सम्प्राप्ते कुर्वीत पुनराब्दिकम् ॥

अस्याऽर्थः । प्रथमाब्दिकं मलिम्लुच एव कुर्वीत । पुनराब्दिकं द्वितीयाद्याब्दिकं त्रयोदशे मासे परिपूर्णे चतुर्दशमासे प्रथमदिने कुर्यादिति ।

यत्तु वृद्धवसिष्ठवचनम्—

श्राद्धीयाऽहनि सम्प्राप्ते अधिमासो भवेद्यदि ।

मासद्वयेऽपि कुर्वीत श्राद्धमेवन्न दुष्यति ॥ इति ।

तथा व्यासवचनम्—

षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः ।

उत्तरे देवकार्याणि पितृकार्याणि चोभयोः ॥ इति ।

इदं वचनद्वयं सांवत्सरव्यतिरिक्तमासिकादिश्राद्धविषयम् ।

तदुक्तं स्मृतिचन्द्रिकायाम्—

यौगादिकं मासिकञ्च श्राद्धञ्चाऽऽपरपाक्षिकम् ।

मन्वादिकं तैर्थिकञ्च कुर्यान्मासद्वयेऽपि च ॥ इति ।

अत्राऽऽपरपाक्षिकमिति प्रतिमासं कृष्णपक्षे विधीयमानं श्राद्धमुच्यते, नत्वाश्विनसम्बन्धिमहालयश्राद्धम्; तस्य "न कुर्यात् भानुलङ्घिते" इति "महालयाऽष्टका" इतिच भृगुपरिशिष्टवाक्याभ्यां मलमासे निषेधात् । मलमासादन्यत्र मृतानामपि दैवात् त्रयोदशे अधिमासे सति प्रथमाब्दिकं मलमास एव कार्यम् । संवत्सरे पूर्णे सपिण्डीकरणपक्षाश्रयणेऽपि तत्रैव सपिण्डीकरणं कुर्यात् । तदाह वसिष्ठः—

असंक्रातेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः ।

तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥ इति ।

वर्षमध्येऽधिमासागमे अर्थात् चतुर्दशे मासे प्रथमाब्दिकम् ।

कालादर्शकारैस्तु—प्रत्याब्दिकमपि मासद्वये कर्तव्यमित्युक्तम् । ततश्च वृद्धाऽऽचारप्राप्तत्वान्मलमासेऽपि क्षयदिनस्य वन्ध्यत्वनिरासार्थं पित्रुद्देशेन ब्राह्मणम्भोजयित्वा शुद्धमासे श्राद्धं कुर्यादिति ।

तदुक्तं बृहत्पाराशरेण—

पिण्डवर्जमसंक्रान्तौ संक्रान्तौ पिण्डसंयुतम् ।
प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि च ॥

क्षयमासात्पूर्वासंक्रान्तविषयं किञ्चिदुक्त्वा क्षयविषयमप्यभिधीयते ।

तत्र क्षयस्वरूपमुक्तं सिद्धान्ते—

असंक्रान्तमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तमासः क्षयाख्यः कदाचित् ।
क्षयः कार्तिकादित्रये, नान्यदा स्यात्
तदा वर्षमध्येऽधिमासद्वयञ्च ॥

एतस्याऽऽगमनकाल उक्तस्तत्रैव—

गतोऽब्ध्यद्रिनन्दैः ( ९७४ ) गते शाककाले
तिथीशै(१११५)र्भविष्यत्यथाङ्गाऽक्षसूर्यैः (१२५६) ।
गजाद्र्यग्निभूभि(१३७८)स्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः (१४१) क्वचिद्गोकुभि(१९)श्च ॥

एतन्नितयमपि त्याज्यम्—

यद्वर्षमध्ये त्वधिमासयुग्मं
तत्कार्तिकादित्रितये क्षयाख्ये ।
मासत्रयं त्याज्यमिदं प्रयत्नाद्
विवाहयज्ञोत्सवमङ्गलेषु ॥ इति ।

एवं त्रयोदशमासात्मके वर्षे अधिमासशब्दः क्षयमासादूर्ध्वं भाविन्यसंक्रान्तिमासे प्रवर्तते, न पूर्वभाविनि । तदुक्तं तत्रैव—

एकत्र मासद्वितयं यदि स्यात्
वर्षाऽधिकस्तत्र परोऽधिमासः ।

त्रयोदशं तु श्रुतिराह मासं
चतुर्दशः क्वाऽपि न चाऽस्ति दृष्टः ॥

द्विसंक्रान्तेऽपि मलमासवद्वर्ज्यावर्ज्यविवेकः स्यात् । तदुक्तम्—

मलमासे द्विसंक्रान्तौ संक्रान्तिरहिते तथा ।
कार्यवर्ज्यविवेकः स्यादिति शास्त्रविदो विदुः ॥

संक्रान्तिरहिते मासे यथा कार्यविवेकः तथैव द्विसंक्रान्तौ संक्रान्तिद्वययुक्तेऽपि मासे स्यादिति धर्मशास्त्रविदो विदुः । द्वादशाऽहं सपिण्डाहमिश्राद्यनियतनिमित्तानि कर्माणि, अब्दोदकं कुम्भमित्यादिनियतनिमित्तानि च कर्माणि कुर्यात्, अनित्यमनिमित्तं चेत्यादिकर्माणि वर्जयेदित्यर्थः ।

काठकगृह्येऽपि—

रविसंक्रमहीने यो वर्ज्यावर्ज्यविधिः स्मृतः ।
स एव तु द्विसंक्रान्तौ मलमासेऽप्युदीरितः ॥ इति ।

अतो मलमासोक्तं कर्तव्याऽकर्तव्यविधानं सर्वमत्राप्यनुसन्धेयमिति । एवं कालादर्शेऽप्युक्तम्—“मलमासवदत्राऽपि भवति” द्वितीयाब्दिकादौ विशेषः स्मृत्यन्तरात्—

एक एव यदामासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥ इति ।

गालवोऽपि—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मासद्वयेऽपि तत्कुर्यात् व्याघ्रस्य वचनं यथा ।

अत्र मासद्वयेऽपि सति संक्रान्तिद्वययुक्तत्वान्मासद्वयात्मके क्षयमासे इत्यर्थ इति व्याख्यातं निबन्धान्तरे ।

अत्रैवं विशेषः क्षयमासमध्ये मरणे सति सांवत्सरिकादौ मरणमासज्ञानोपायः । क्षयमासस्थां तिथिं द्विधा विभज्य पूर्वार्द्धे मरणं चेत् पूर्वे मासे, द्वितीयेऽर्धे चेत् उत्तरे मासे ज्ञेयः । तथाचोक्तम्—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः ।

मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यमौ ॥ इति।

एवं पक्षः–शुक्ले शुक्लपक्षः, कृष्णे कृष्ण इति। तत्र जन्मानि प्रतिवर्षं जन्मदिवसोत्सवेऽप्येवम्।

एवं दीपिकायामपि—

"नष्टानां क्षयमासगासु तिथिषु प्रागन्त्ययोरर्द्धयो-
ग्राह्यास्तास्तिथयः क्षयाहविषये प्रागूर्ध्वमासस्थिताः।

एवं तद्भववर्धनेऽपि" इति। क्षयमासे यस्यास्तिथेः पूर्वार्द्धे मृतः सैव तिथिः क्षयात्पूर्वमासस्था ग्राह्या। एवमुत्तरार्द्धेचेन्मृतः तदाक्षयादुत्तरमासस्थेति योजना। एवं तद्भववर्द्धनेपीति। क्षयमासोत्पन्नस्य वर्द्धापनेऽपि एवं तिथिः ग्राह्येत्यर्थः। नियतं त्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत मलिने मासोपवासव्रतमिति स्पष्टम्।

विवाहमध्ये यदि चेत् क्षयाहस्तत्राश्रुमुख्याः पितरो न यान्ति।
जाते विवाहे परतः प्रकुर्यात्, श्राद्धस्वधाभिर्नतु दूषयेत्तत् ॥
विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्।
वैधव्यमाप्नोति तदा तु कन्या, जीवेत्पतिश्चेदनपत्यता स्यात् ॥

इति मलमासे क्षयाहश्राद्धनिर्णयः।

अथ नैमित्तिकश्राद्धकालनिर्णयः। ग्रन्थान्तरे—

नैमित्तिकन्तु यच्छ्राद्धं निमित्ताऽनन्तरम्भवेत्।
नान्दीमुखाह्वयं प्रातराग्निकन्त्वपराण्हतः ॥

यच्छ्राद्धं नैमित्तिकं तन्निमित्तानन्तरम्भवेत्। तुशब्द एकोद्दिष्टोक्तमध्यान्हव्यावर्तकः। नान्दीमुखाव्हयं प्रातः पूर्वाण्हे भवेत्।

देवलोऽपि—

पूर्वाह्णे दैविकं कर्म, त्वपराह्णे तु पैतृकम्।
एकोद्दिष्टन्तु मध्याह्ने, प्रातर्वृद्धिनिमित्तकम् ॥ इति।

तदाह शातातपः—

आमश्राद्धन्तु पूर्वाह्णे, एकोद्दिष्टन्तु मध्यमे।

पार्वणश्चाऽपराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥ इति ।

एवं सर्वस्य नान्दीमुखस्य प्रातःकालप्रसक्तौ विशेषमाह—"आग्निकं त्वपराह्णतः" इति । सप्तम्यर्थे तसिल् । आग्निकमग्न्युत्पत्तिनिमित्तकम्, आधाननिमित्तमित्यर्थः । तदपराह्णे भवेत् ।

तदाह गालवः—

आमश्राद्धन्तु पूर्वाह्णे सिद्धान्नेन तु मध्यमे ।
पार्वणश्चाऽपराह्णे तु वृद्धिश्राद्धं तथाऽऽग्निकम् ॥ इति ।

नियतनिमित्तं प्रातरनियतनिमित्तं निमित्ताऽनन्तरं कार्यम् ।

तदाह लौगाक्षिः—

नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् ।
तेषामनियतत्वे तु तदानन्तर्यमिष्यते ॥

अत्रिरपि—

पूर्वाह्णे वै भवेद् वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

पुत्रजन्मनीत्यनियतनिमित्तोपलक्षणम् । तात्कालिकं पुत्रजन्मानन्तरम् ।

तदाह कार्ष्णाजिनिः—

प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

इति नैमित्तिकश्राद्धकालनिर्णयः ।

अथ गयाश्राद्धकालनिर्णयः । वायुपुराणे—

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ इति ।

अत्र श्राद्धस्य यात्रापूर्वकत्वाद्गयाम्प्रति यात्रा न निषिद्धेत्यर्थः । अन्यतीर्थयात्रायान्तु निषेध उक्तः शातातपेन—

अस्तङ्गते गुरौ शुक्रे, वृद्धे, बाले, मलिम्लुचे ।
व्रतारम्भाऽपवर्गश्च न कुर्यान्मौञ्जिबन्धनम् ॥

दामोदर्येऽपि--

नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
संन्यासो यज्ञयात्रा(१)व्रतनियमविधिः कर्णवेधोऽपिदीक्षा।
मौञ्जीबन्धोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थिते च॥

अत्राऽपि तीर्थयात्रा ऽपूर्वैव। सपूर्वा तु कार्यैव। इति गया-श्राद्धकालनिर्णयः।

अथ केनचिन्निमित्तेन श्राद्धदिवसेऽतीते श्राद्धकाल-निर्णयः।

तत्र मरीचिः—

श्राद्धविघ्ने समुत्पन्नेऽप्यविज्ञाते मृताऽहनि।
कुर्यादन्नेन कृष्णायामेकादश्यां विधुक्षये॥ इति।

अत्र मृताऽहनि श्राद्धविघ्ने समुत्पन्ने अविज्ञातेपीत्यर्थः। अतश्च मृताहश्राद्धस्यैव मासिकस्य साम्वत्सरिकस्य च कृष्णैकादश्यमावास्ययोर्विधानं, नामावास्यादिश्राद्धस्य। सूतकेनाऽऽब्दिके श्राद्धेऽन्तरिते सूतकानन्तरदिने तत्कुर्यात्। तदाह ऋष्यशृङ्गः—

आब्दिके चैव सम्प्राप्ते आशौचं जायते यदि।
आशौचे तु व्यतिक्रान्ते तत्र श्राद्धं विधीयते॥ इति।

आशौचानन्तरदिनेऽपि करणासम्भवे अमावास्यायां कुर्यात्।

तदाह गोभिलः—

दैवात्प्रत्याब्दिके श्राद्धे त्वन्तरामृतसूतके।
आशौचानन्तरङ्कुर्यात्तन्मासेन्दुक्षयेऽपि च॥ इति।

केचित्त्वाशौचानन्तरं पुनः क्षयाहतिथावेव कार्यमित्याहुः।

यथा—

तदहश्चेत् प्रदुष्येतकेनचित्सूतकादिना।
सूतकानन्तरङ्कुर्यात्पुनस्तदहरेव च॥ इति।

---

(१)'देवयात्रा' इति निर्णयसिन्धौ पाठः।

अत्र सूतकादिना सूतकानन्तरमिति च सूतकपदं विघ्ननिमित्तोपलक्षणम् । सूतकानन्तरमिति सामान्योपादानेऽपि सूतके एकादशे दिवसे मृतके त्रयोदश इति ।

मृते त्रयोदशे श्राद्धं वृद्धावेकादशेऽहनि ।

इति श्राद्धकमलेऽभिधानात् । धर्मप्रदीपेऽपि—

सूतकान्तरितं श्राद्धं प्रमादादकृतं तथा ।
तद्दिने द्वादशाहे वा कर्तव्यं वाऽपि पर्वणि ॥

द्वादशेऽहनि सूतक इति द्रष्टव्यम् । तथा—

भार्या रजस्वला यत्र मातापित्रोः क्षयेऽहनि ।
पञ्चमेऽहनि कुर्वीत, केचित्तदहरेव हि ॥

तथा—

भार्या रजस्वला यत्र श्राद्धं स्यात्पञ्चमेऽहनि ॥

इति श्री महाराजाऽधिराजैसहगिलान्वयैकभूषण परमानन्दादिष्ट 'धर्माधिकारि'रामपण्डितात्मज पण्डित विनायककृतायां श्राद्धकल्पलतायां श्राद्धस्वरूप-कर्तृ-काल-निरूपणस्तबकः प्रथमः ॥

अथ श्राद्धदेशाः—

दक्षिणाप्रवणे देशे तीर्थादौ च गृहेपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥
स्वभूमौ च नदीतीरे देशे केशाद्यदूषिते ।
स्थलीषु गिरिपृष्ठेषु सरस्स्वायतनेषु च ॥
गोष्ठेषु च विविक्तेषु तुष्यन्ति पितरस्सदा ।

स्कन्दपुराणे—

तुलसीकाननच्छाया यत्र यत्र भवेद् द्विज ।
तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे ॥
तुलसीबीजनिकरः प्रपतेद्यत्र नारद ।

पिण्डदानं कृतं तत्र पितॄणामक्षयम्भवेत् ॥

तीर्थं ऋषिसेवितं सलिलाश्रमादि । भूसंस्काराः केशतुषाङ्गारामेध्यास्थिप्रभृतिकुत्सितद्रव्यापसारणपुरःसरमुल्लेखनपरिसमूहनगोमयलेपनादयः । स्वतो दक्षिणाप्रवणाऽभावे प्रयत्नेनाऽपि दक्षिणाप्रवणत्वं कुर्यात् । तदाह मनुः—

शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥ (३।२०६)

स्वभूमौ स्वकीयगोष्ठादौ । अकृत्रिमप्रदेशकः स्थली ।

अथ निषिद्धदेशः ।

रूक्षं कृमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम् ।
पिपीलिकादिजुष्टं च ष्णुष्टं व्यालादिभीतिकम् ॥
श्वखरोष्ट्रादिजुष्टञ्च परकीयञ्च कृत्रिमम् ।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्माणि ॥

रूक्षमस्निग्धं, क्लिन्नं पङ्किलम् , सङ्कीर्णं पदार्थान्तरैराकीर्णम् , अनिष्टगन्धिकं पूतिगन्धादियुतम् । ष्णुष्टम् अग्निदग्धम् । परकीयं परगृहीतं गृहगोष्ठादि, नतु गिरिसरिदरण्यतीर्थानि तस्यास्वामिकत्वात् । तथाच—

परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः ।
तद्भूमिभागिनस्तस्य हरन्ति पितरो बलात् ॥
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यञ्च जीवताम् ॥

कृत्रिमम् इष्टकादिनिबद्धम् । "नेष्टकाचिते पितॄन् तर्पयेत्"इतिस्मरणात् । अनिष्टशब्दं श्रूयमाणविलापशब्दम् ।

ब्रह्माण्डपुराणे श्राद्धकल्पे चतुर्दशेऽध्याये—

त्रिशङ्कोर्वर्जयेदिष्टं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन च कैकटम् ॥
देशस्त्रैशङ्कवो नाम वर्ज्यो वै श्राद्धकर्माणि ।

काम्यदेशानाह शङ्खः—

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे हिमालये ।
नर्मदा-बाहुदा-तीरे सर्वमानन्त्यमश्नुते ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायाञ्च दत्तमक्षयतां व्रजेत् ॥
पिण्याकैः सक्तुभिर्वाऽपि गयाशीर्षे सकृन्नरः ।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः ॥

गयाशीर्षप्रमाणञ्चाऽऽदित्यपुराणे अभिहितम्—

पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः ।
महानद्याः पश्चिमेन यावद् गृध्रेश्वरो गिरिः ॥
उत्तरे ब्रह्मयूपस्य यावद् दक्षिणमानसम् ।
एतद् गयाशिरो नाम विष्णुलोकेऽपि विश्रुतम् ॥

वायुपुराणे—

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥

सप्तगोत्राणि तु ग्रन्थान्तरे—

पिता माता च भार्या च भगिनी दुहिता तथा ।
पितृ-मातृ-ष्वसा चैषां सप्तगोत्राणि वै विदुः ॥ इति ।

अत्र मातृशब्देन मातामहगोत्रम् । भार्यागोत्रं श्वशुरगोत्रम् । भगिनी दुहितृ पितृष्वसृ मातृष्वसॄणां गोत्राणि यत्कुले ता दत्तास्तदीयानि । एतेषामेव गोत्राणामेकोत्तरशतकुलं लक्षणया तत्स्थाः पुरुषा गृह्यन्ते । ते यथा—

तत्त्वानि विंशति नृपा द्वादशैकादशा दश ।
अष्टाविति च गोत्राणि कुलमेकोत्तरं शतम् ॥ इति ।

पितृगोत्रे तत्त्वानि चतुर्विंशतिः । एते च द्वादश परे, तावन्त एवाऽवरे । मातृगोत्रे दशपरे दशैवावरे इत्येवं विंशतिः । भार्यागोत्रेऽष्टौ परे अष्टाववरे । भगिनीगोत्रे तद्भर्त्रादयः षट् परे भागिनेयादयः षडवरे इत्येवं द्वादश । दुहितृगोत्रे तच्छ्वशुरादयः पञ्च परे पञ्च दौहित्रादयोऽवरे जामाता चेत्येकादश । पितृष्वसृकुले तच्छ्वशुराद्याः परे पञ्च तद्भर्ताद्या अवरे पञ्चेत्येवं दश । मातृष्वसृकुले तच्छ्वशुराद्याश्चत्वारः परे तद्भर्त्राद्याश्चत्वारोऽवरे इत्येवमष्टौ । सर्वे समुदिता एकोत्तरशतं भवन्ति । इति श्राद्धदेशाः ।

अथ श्राद्धार्हब्राह्मणा इतिहासे—

वेदाध्यायी तु यो विप्रः सततं ब्रह्मणि स्थितः ।
स्वाचारो अग्निहोत्री च सोऽग्निर्वै कव्यवाहनः ॥ इति ।
अविद्वान्वा सुविद्वान्वा सुकुलो दुष्कुलोऽपि वा ।
बीजक्षेत्रात्मसंशुद्धः श्राद्धेष्वर्हः स्वकर्मकृत् ॥
तस्मात्सदाचारपरान्वेदज्ञान् कर्मतत्परान् ।
चतुःशुद्धान् द्विजः श्राद्धे कुलीनानर्चयेद् बुधः ।

अत एवाह—

विशुद्धो बीजयोनिभ्यां श्रोत्रियः श्रोत्रियात्मजः ।
स्वधर्मनिष्ठः शान्तात्मा श्राद्धे केतनमर्हति ॥

चतुःशुद्धलक्षणं स एवाऽह—

यस्य माता पिता वात्मा शुद्धा भार्या च स द्विजः ।
चतुःशुद्धः स्मृतस्तज्ज्ञैः सदाचारस्तु पञ्चमः ॥
त्रिणाचिकेतः त्रिमधुः त्रिसुपर्णः षडङ्गवित् ।
वेदविद्यः सपत्नीकः श्राद्धे केतनमर्हति ॥

ऋत्विक् सदस्योऽप्याचार्यः स्नातकश्च सुयन्त्रितः ।
सन्ध्यावन्दननिष्ठश्च श्राद्धे केतनमर्हति ॥

यत्तु विश्वामित्रेणोक्तम् —

न ब्राह्मणम्परीक्षेत कदाचिदपि बुद्धिमान् ।
दातॄन् परीक्ष्य दत्तानि नयन्ति नरकं ध्रुवम् ॥

तत्तीर्थश्राद्धविषयम्, तद्वचनस्य तीर्थश्राद्धप्रकरणे दर्शयिष्यमाणत्वात् । एवमन्यान्यपि वचनानि योज्यानि । परीक्षाप्रकारस्तु वृद्धमनुस्मृतिमत्स्यपुराणयोर्दर्शितः ।

शीलं संवत्सराज्ज्ञेयं, शौचं संव्यवहारतः ।
प्रज्ञा सङ्कथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

स्मृत्यन्तरेऽपि—

सर्वलक्षणसंयुक्तैः विद्याशीलगुणान्वितैः ।
पुरुषत्रयविख्यातैः सर्वं श्राद्धम्प्रकल्पयेत् ॥
जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः, शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥
शौचाऽऽचारे स्थितः सम्यक् विद्याभ्यासी गुरुप्रियः ।
सत्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
तपः श्रुतञ्च योनिश्चाप्येतद् ब्राह्मणलक्षणम् ।
सत्यं दानं दमोऽद्रोहमानृशंस्यं क्षमा घृणा ॥
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतिः ।
गृहस्थो ब्रह्मचारी च यजुर्वेदविदेव च ॥
वेदविद्याव्रतस्नाता ब्राह्मणाः पाङ्क्तिपावनाः ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥
ब्रह्मदेयानुसन्तानः छन्दोगो ज्येष्ठसामगः ।
त्रिमधुश्चेति विज्ञेया ब्राह्मणाः पाङ्क्तिपावनाः ॥

इतोऽपि ब्राह्मणविषये विशेषो गोविन्दपण्डितकृतायां

श्राद्धदीपिकायां द्रष्टव्यो विस्तरभिया नेहोक्तः।

अथाऽनुकल्पः। तत्र मनुः—

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः॥ (३।१४७)
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्॥ (३।१४८)

विट्पतिर्जामाता, बन्धुशब्देन शारीरबन्धवः स्नेहबन्धवश्च गृह्यन्ते। वसिष्ठः—शिष्यानपि गुणवतो भोजयेत्।

कूर्मपुराणे—

असमानप्रवरको ह्यसगोत्रस्तथैव च।
असम्बन्धी च विज्ञेयो ब्राह्मणः श्राद्धसुश्रिये॥
श्राद्धेषु विनियोज्याः स्युः ब्राह्मणा ब्रह्मवित्तमाः।
ये योनिगोत्रमन्त्रान्तेवासिसम्बन्धवर्जिताः॥

गर्गोऽपि—

नैकगोत्रे हविर्दद्यात्समानप्रवरेऽपि च।
न चाऽज्ञातकुले दद्याद्यथा कन्या तथा हविः॥
अभावे ह्यन्यगोत्राणां सगोत्रानपि भोजयेत्।

अत्र सगोत्रशब्देन एकगोत्रा असम्बन्धिनः अभ्यनुज्ञायन्ते। सगोत्रश्च सप्तमपुरुषादूर्ध्वं प्रशस्त इत्येके।

तदुक्तं श्राद्धकाशिकायां जाबालेन—

षड्भ्यस्तु पुरुषेभ्योऽर्वाक् श्राद्धे हेयास्तु गोत्रजाः।
षड्भ्यस्तु परतो भोज्या श्राद्धे स्युर्गोत्रजा अपि॥ इति।

नेत्यपरे—

समानोदकता येषां सापिण्ड्यं वा भवेद्यदि।
ते वर्ज्या हव्यकव्येषु नेतरे गोत्रिणो द्विजाः॥

इति ब्राह्मेऽभिधानात्। दिवोदासनिबन्धे बौधायनः—"तस्मादेवं

विधं सपिण्डमप्याशयेत्' इति। एवंविधं गुणवन्तम्। तं च त्रिपुरुषात्परम्। तथाच गौतमः—"सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्यो गुणवत" इति। 'गुणहान्या तु परेषां सगुणः सोदर्योऽपि भोजनीयः' इति कल्पतरुः। वेदविद्विप्राभावे भ्राता वा बहुश्रुतः पुत्रो वा श्राद्धे नियोज्य इति विश्वादर्शः। वायुपुराणेऽपि—

पुत्रं वाप्यथवा पौत्रं ज्ञानिनं यस्तु भोजयेत्।
पितरस्तस्य तुष्यन्ति सुकृष्टेनैव कर्मणा॥ इति।

बहूनामलाभे एकोऽपि कार्यः। तदाह श्राद्धतत्त्वालोके वसिष्ठः—

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम्।
यद्येकं भोजयेच्छ्राद्धं दैवं तत्र कथं भवेत्॥
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु।
देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत्॥
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे।

एकब्राह्मणपक्षे विश्वेदेवस्थाने पात्रं प्रकल्प्य दैवे निवेद्य तमेकं विप्रं पित्रादिषु मातामहादिषु च नियुञ्जीत। शङ्खोऽपि—

एक एव यदा विप्रो द्वितीयो नोपपद्यते।
पितॄणां ब्राह्मणो योज्यो दैवे स्वाग्निं नियोजयेत्॥

विप्राऽभावे विशेषमाह वसिष्ठो नारायणसर्वज्ञे—

निधाय दर्भकबटूनासनेषु समाहितः।
प्रैषानुप्रैष संयुक्तं विधानं परिकल्पयेत्॥

दर्भबटुरपरिमितकुशमयो ग्रन्थिः—

यज्ञवस्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥

इति वचनात्।

अथ वर्ज्याः—

न श्राद्धे भोजयेन्मित्रं, धनैःकार्योऽस्य सङ्ग्रहः।
नारिं न मित्रं यं विद्यात् तं श्राद्धे भोजयेद् द्विजम्॥

ये स्तेनाः पतिताः क्लीबा ये च नास्तिकवृत्तयः।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥
जटिलं चाऽनधीयानं, दुर्बलं कितवं तथा।
याजयन्ति च ये पूगान् तांश्च श्राद्धे न भोजयेत् ॥
चिकित्सका देवलका मांसविक्रयिणस्तथा।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा।
शूद्रशिष्यो गुरुश्चैव वाक्दुष्टः कुण्डगोलकौ ॥
अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी।
समुद्रयायी बन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च केकरो मद्यपस्तथा।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥
धनुःशराणां कर्ता च यश्चाऽग्रे दिधिषूपतिः।
मित्रध्रुग् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥
हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥

स्रोतसां भेदकश्चैव तेषां वाऽऽवरणे(१) रतः ।
गृहसंवेशको दूतो वृक्षारोपक एव च ॥
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ।
हिंस्रो वृषलपुत्रश्च गणानाश्चैव याजकः ॥
आचारहीनः क्लीबश्च नित्यं याजनकस्तथा ।
कृषिजीवी (२)श्लीपदी च सद्भिर्निन्दित एव च ॥
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥
एतान् विगर्हिताऽऽचारानपाङ्क्तेयान् द्विजाऽधमान् ।
द्विजातिप्रवरो विद्वानुभयत्राऽपि वर्जयेत्॥ (म.स्मृ.३-१६७)

स्तेनो ब्राह्मणसुवर्णव्यतिरिक्तद्रव्यापहर्ता, ब्राह्मणसुवर्णहर्तुस्तु पतितपदेनैवाभिधानात् । पतितो महापातकी । क्लीबः सप्तविधो नपुंसकः ।

कर्मविपाकसङ्ग्रहे—

षण्ढको वातजः षण्ढः पण्डः क्लीबो नपुंसकः ।
कीलकश्चेति सप्तैवं क्लीबभेदा विभाषिताः ॥
तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्ढको भवेत् ।
पुमान् भूत्वा स्वलिङ्गानि पश्चात् छिन्द्यात्तथैव च ॥
स्त्री च पुम्भावमास्थाय पुरुषाचारवद्गुणा ।
वातजो नाम षण्ढःस्यात्स्त्रीषण्ढो वाऽपि नामतः ॥
असल्लिङ्गोऽपि षण्ढःस्यात्पण्डस्तु म्लानमेहनः ।
अमेध्याशी पुमान् क्लीबो, नष्टरेता नपुंसकः ॥
स कीलक इति ज्ञेयो यः क्लैब्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

---

(१) 'वाचरणे' इति क पुस्तके पाठः ।
(२) 'कृषिजीवी स्तेयजीवी' क. ख. ग. ।

नास्तिकाः—नास्तिकर्म फलदमित्याभिमानिनस्तेभ्यो वृत्तिर्येषा-न्ते। जटिलो ब्रह्मचारी। अनधीयानमिति तद्विशेषणम्। अन-धियानस्य श्राद्धे हेयत्वात्। दुर्बलः खल्वाटकः कपिलकेशो वा। कितवो द्यूताऽऽसक्तः। पूगयाजको गणयाजकः। चिकित्सकाः भिषजः। देवलकाः धनार्थं देवार्चकाः। मांसविक्रयिणः सकृदपि। "सद्यः पतति मांसेनेति"। विपनेन वणिकक्रियया जीवन्तः। प्रे-ष्यो धनार्थं ग्रामराजाज्ञाकारी। कुनखिश्यावदन्तौ स्वभावान्मृ-तनखकृष्णदन्तौ, अनयोः पुराकृतकर्मशेषसम्बन्धादेव प्रतिषेधः। प्रतिरोद्धा विरोधी। गुरुम्प्रति प्रतिकूलाचरणशीलः। त्यक्तश्रौ-तस्मार्ताग्निः। वृध्याजीवो वार्द्धुषिकः। सति सोदर्ये योग्ये च ज्येष्ठे कनीयान् प्रथमं दाराग्निसंयोगं कुरुते स परिवेत्ता। विस्मृतवेदो निराकृतिः। ब्रह्मद्विट् ब्राह्मणद्वेषी। गणो मठाऽधिवासिनां समूह-स्तन्मध्यगो गणाभ्यन्तरगः। कुशीलवो नटवृत्तिः। अवकीर्णी त्यक्तब्रह्मचर्यः। वृषल्यनेकविधा, तत्पतिः।

तथाच—

वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा।
चाण्डाली च वृता या च कुमारी या रजस्वला॥

पुनर्भूरनेकविधा तत्पुत्रः पौनर्भवः। यस्य एकं चक्षुः स का-णः। यस्य गृहे भार्याया उपपतिर्जारः। भृतको भृत्या परिक्रीतो-ऽध्यापकः। तेनैवाऽध्यापितस्तस्य शिष्यः। शूद्रस्य शिष्यः शूद्रशिष्यः। गुरुश्च शूद्रस्येति शेषः। वाग्दुष्टो निष्ठुरः। अमृते भर्तरि ब्राह्मणाज्जातः कुण्डः। मृते गोलकः। शूद्रादिजातस्य श्राद्धे प्राप्त्यभावात्। कारणं पातित्यं तेन विनैव पित्रोर्गुरोश्च त्यागी। ब्राह्मैरध्ययनाऽध्यापनै-र्यौनैर्वैवाहिकैः सम्बन्धैः। पतितैः सावित्रीपतितैर्व्रात्यैर्य इमं सं-योगं गतः। अगारदाही गृहदाहकः। गरदो विषदः विप्रादन्ये-षाम्। तस्य दानेन महापातकत्वेन सङ्ग्रहात्। कुण्डाशी कुण्डगोलक-

योर्गृहे भोक्ता। सोमविक्रयी सोमलताविक्रेता। समुद्रायायी वहित्रमारुह्येतिशेषः। बन्दी स्तावकः। तैलिकः तिलयन्त्रप्रवर्त्तकः। कूटकारको मानतुलाकूटकारी। पित्रा धनार्थं विवदमानः। केकरोऽध्यर्द्धदृष्टिः(१)। मद्यपो द्राक्षादिमद्यपः। पापरोगी कुष्ठादिनिन्द्यरोगी। अभिशस्तो वाच्ययुक्तः। दाम्भिकः पाखण्डकूटधर्मचारी। रसविक्रयी गुडलवणादिविक्रेता। वृत्त्यर्थं धनुःशराणां कर्त्ता। ज्येष्ठायाम् अनूढायां कनीयसी परिणीयते सा अग्रेदिधिषूः, तस्याः पतिः। मित्रध्रुक् मित्रद्वेष्टा। द्यूतवृत्तिर्द्यूतजीवकः। पुत्र एव आचार्योऽस्य असौ पुत्राचार्यः। ग्रामशिशूनाम् अक्षरपाठकश्च। भ्रामरी भ्रमरवत् अर्थार्जकः। गण्डमाली गण्डरोगविशेषः। चित्री वृत्त्यर्थं चित्रकर्ता। पिशुनः सूचकः। उन्मत्तः उन्मादवान्। अन्धः सर्वथा गतचक्षुः। वेदस्य निन्दकः वेदनिन्दकः। हस्तिगोऽश्वोष्ट्रदमको दमनजीवनः। नक्षत्रैः ज्योतिषवृत्त्या जीवकः। पक्षिणां पञ्जरसंस्थानां क्रीडार्थं पोषकः। युद्धाचार्यो युद्धोपदेष्टा। स्रोतसां भेदकः स्रोतोनिरोद्धा तेषां वावरणे रतः निजगतिप्रतिबन्धकः। ग्रहसंवेशको वर्द्धकिधर्मे वर्तमानः। दूतोदूत्यवृत्तिः। वृक्षारोपको वृत्त्यर्थम्। श्वक्रीडी श्वभिः क्रीडी। श्येनैर्जीवति क्रयविक्रयादिना। कन्यादूषकः अङ्गुल्यादिना योनिविदारकः। हिंस्रः हिंसारतः। वृषलः अधर्मः तत्पुत्रो वृषलपुत्रः, वृषल एव पुत्रो यस्याऽसौ वृषलपुत्रः। गणानां याजकः अनेकयजमानकोऽहीनद्वादशाहादियज्ञेषु याजकः। गुर्वतिथिप्रत्युत्थानाद्याचारवर्जितः। क्लीबः स्वधर्मेष्वनुत्साही। निसयाजकत्वेन परोद्वेजकः। स्वयङ्कृतया कृष्या यो जीवति। श्लीपदी व्याधिना स्थूलचरणः। केनाऽपि निमित्तेन सतां निन्दाविषयः। औरभ्रिको मेषपोषकः। माहिषिको व्यभिचारिण्या भर्ता पुत्रश्च। परपूर्वा प्रागन्यस्मै दत्ता तस्याः पतिः परिणेता। प्रेतनिर्यातको मूल्येन प्रेतहारकः।

(१) नेत्रवियुक्त इत्यर्थः। 'तिरछा' इति ख्यातः।

यमोऽपि—

काणाः कुब्जाश्च षण्डाश्च कृतघ्ना गुरुतल्पगाः ।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाः चिकित्सकाः ॥
राष्ट्रकामास्तथोन्मत्ताः पशुविक्रायिणश्च ये ।
मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः ॥
राजभृत्यान्धबधिरा मूकखल्वाटपङ्गवः ।
वणिजो मधुहर्त्तारो गरदा वनदाहकाः ॥
समयानां च भेत्तारः प्रदाने ये निवारकाः ।
प्रव्रज्योपानिवृत्ताश्च वृथाप्रव्राजिताश्च ये ॥
यश्च प्रव्राजिताज्जातः प्रव्रज्यावासितश्च यः ।
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ॥
अवकीर्णी च वीरघ्नः गुरुघ्नः पितृदूषकः । इति

राष्ट्रकामाः नृपधर्माभिलाषुकाः । वान्ताशी भुक्तंवमित्वा-लालसया पुनर्भोजी ।

सालङ्कायनोऽपि—

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च ।
दग्धकर्णैश्च यद् भुक्तं तद्वै रक्षांसि गच्छति ॥

लम्बकर्णलक्षणमाह गोभिलः—

हनुमूलादधःकर्णौ लम्बौ तु परिकीर्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥

मरीचिः—

अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च ।
वर्जनीयाः प्रयत्नेन ब्राह्मणाः श्राद्धकर्मणि ॥
मूकश्च पूतिनासश्च छिन्नाङ्गश्चाऽधिकाङ्गुलिः ।
गलरोगी च गडुमान् स्फुटिताङ्गश्च सज्वरः ॥
षण्ढस्तूपरमन्दाश्च ये चाऽन्ये दीर्घरोगिणः ।
चतुराश्रमबाह्येभ्यः श्राद्धन्नैव प्रदापयेत् ॥

गड्डुमान् रोगवशादुरसि पृष्ठे चोन्नताऽस्थिसंस्थानः। तूपरो यौवनेऽप्यश्मश्रुः। "काकघाती कूर्चहीनश्च" इतिस्मरणात्।

स्कान्दे—

वर्जयेत्कुण्डगोलौ तु नास्तिकं रङ्गजीविनम्।
जपहोमविरक्तश्च शाकुनं राजसेवकम्॥
चिकित्सकश्च गणकं कितवं हेतुवादिनम्।

हेतुवादी तर्कबलेन सर्वत्र संशयकृत्।

वृथाऽऽमिषपरित्यागी वृथापाकरुचिर्द्विजः।
ब्राह्मणा ये विकर्मस्था बैडालव्रतिकाश्च ये॥
धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः (म.४।१९५)॥

शठः—

रोगी हीनातिरिक्ताङ्गः क्रूरो धूर्तपुरोहितः।
अनध्यायेष्वधीयानः सूचकश्चानियामकः।

विवादद्रष्टा—

स्त्रीजितश्च कदर्यश्च स्वदूष्यश्चाहितुण्डकः।
ग्रामयाजी शूद्रयाजी वेदसोमोपजीवकः॥

वृथेति श्राद्धादौ मांसत्यागी। आहितुण्डकः अहिदन्तोत्पाटकः।

आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयेत्।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः॥

एतस्य क्वचिदपवादमाह—

अपि चेन्मन्त्रविद् युक्तः शारीरैः पङ्क्तिदूषणैः।
अदूष्यंतं यमः प्राह पङ्क्तिपावन एव सः॥

एवं परीक्षाक्रमेण सम्यग्विचार्य विवर्जितसंस्थाकान् ब्राह्मणान् पूर्वेद्युर्निमन्त्रयेत्।

निमन्त्रयत पूर्वेद्युः स्वशाखीयान् द्विजोत्तमान्।
स्वशाखीयद्विजाभावे द्विजानन्यान्निमन्त्रयेत् ॥

देवलोऽपि—

श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद् भुक्त्वा भुक्तसर्वजने गृहे ॥

स्वगृहे यद् जनजातमस्ति तस्मिन् भुक्तवति सति पश्चान्निमन्त्रयेत् इत्यर्थः।

आमिषाणि च पद्मपुराणे कार्तिकमाहात्म्ये—

'प्राण्यङ्गमामिषं शुक्तिशङ्खादिचूर्णं फलं जम्बीरमामिषम्'।
धान्ये मसूरिका प्रोक्ता ह्यन्नम्पर्युषितं तथा।
गोछागीमहिषीदुग्धादन्यदुग्धादि चामिषम् ॥
द्विजक्रीता रसास्सर्वे लवणं भूमिजं तथा।
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ॥
आत्मार्थे पाचितं चाऽन्नमामिषं तत्स्मृतं बुधैः। इति ॥

निमन्त्रणप्रकारो मात्स्ये—

दक्षिणं जानुमालभ्य त्वं मयाऽत्र निमन्त्रितः। इति।

चरणग्रहणे वर्णानां विशेषमाह प्रचेताः—

दक्षिणं चरणं विप्राः सव्यं च क्षत्रियस्तथा।
पादावादाय वैश्यो द्वौ शूद्रश्च प्रीतिपूर्वकम् ॥

निमन्त्रयेदिति शेषः। निमन्त्रणं शिष्यादिभिरपि कार्यम्।
यथाऽऽह यमः—"स्वयं शिष्योऽथवा सुतः" इति।
प्रचेताः—

सवर्णम्प्रेषयेदाप्तं द्विजानामुपमन्त्रणे।

एषु पूर्वः पूर्वः श्रेयान्। यमः—

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम्।
तथैव वृषलस्याऽन्नं ब्राह्मणेन निमन्त्रितम् ॥

ब्राह्मणशूद्रयोरेव निषेधात् क्षत्रियवैश्यकर्तृके श्राद्धे ब्राह्म-

णेन निमन्त्रितेऽपि न दोषः। अत एव पूर्ववचने सवर्णपदं संभवा-
भिप्रायम्।

ब्राह्मणसंख्यामाह—

बहुत्वं ब्राह्मणानान्तु नैव श्राद्धेषु शस्यते।
द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा॥
ब्राह्मणान् भोजयेत् श्राद्धे नाऽधिकं तनुयादतः॥ इति।

ब्राह्मणेनाऽपि अनिन्द्याऽऽमन्त्रणं न प्रत्याख्येयम्। 'अनिन्द्ये-
नामन्त्रितो नापक्रामेत्'इति। 'अशक्तेन प्रत्याख्यानं कर्तव्यम्'इति।
यस्तु निमन्त्रितं ब्राह्मणं त्यजति तं प्रत्याह नारायणः—

केतनं कारयित्वा तु निवारयति दुर्मतिः।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतः शुचिः।
यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते॥ इति।

यस्तु निमन्त्रणमङ्गीकृत्य भोजनसमर्थोऽपि भोजयितारं त्य
जति तं प्रत्याह मनुः—

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः।
कथञ्चिदप्यतिक्रामन्पापः शूकरतां व्रजेत्॥ (३।१९०)

केतितो निमन्त्रितः। कथञ्चिदिति। मिष्टान्नबहुदक्षिणालो-
भादिना न तु भोजनाऽसामर्थ्येनेत्यर्थः। तदेतदाप्तविप्रविषयम्।
तथाच—

विद्यावान्सधनो विद्वान् भोज्यान्नेन निमन्त्रितः।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्॥ इति।

यस्तु तस्माद् गृहीत्वा अन्यस्मादपि ग्रहीतुमिच्छति तं प्रति
निषेधमाह कात्यायनः-'निमन्त्रितोऽन्यदन्यदन्नं न प्रतिगृह्णीयात्'
इति। आमन्त्रितः पूर्वमन्येन निमन्त्रितस्तदीयादन्नादन्यदन्नं
तण्डुलादिरूपं न प्रतिगृह्णीयादित्यर्थः। देवलोऽपि—

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम् ।
भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति ॥

यस्त्वामन्त्रितोप्यनागमनेन कुतपादिश्राद्धकालातिपत्तिं करोति, तस्य दोष आदित्यपुराणे दर्शितः—

आमन्त्रितश्चिरन्नैव कुर्याद्विप्रः कदाचन ।

कर्तृभोक्त्रोर्ब्रह्मचर्यमाह सङ्ग्रहकारः—

श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्ता न कुर्वीत दन्तानां धावनं बुधः ॥

इतिहासोऽपि—

दन्तधावनताम्बूलं तैलाभ्यङ्गमभोजनम् ।
रत्यौषधपरान्नं च श्राद्धकृत्सप्त वर्जयेत् ॥

श्राद्धकर्तुः दन्तधावने प्रायश्चित्तमुक्तं विष्णुरहस्ये—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्या शतसम्पूतमम्बु प्राश्य विशुध्यति ॥
पुनर्भोजनमध्वानं भारमायासमैथुनम् ।
दानं प्रतिग्रहो होमः श्राद्धभुक् त्वष्ट वर्जयेत् ॥
आमन्त्रितस्तु यः श्राद्धे कलहं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं त्वश्रुभोजनाः ॥
आमन्त्रितस्तु यः श्राद्धे भारमुद्वहते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं स्वेदभोजनाः ॥
आमन्त्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः ।
भवन्ति पितरस्तस्य तन्मासं मलभोजनाः ॥
आमन्त्रितस्तु यः श्राद्धे अध्वानं प्रतिपद्यते ।
भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः ॥

आश्वलायनाऽऽचार्योऽपि—

भोज्यन्करिष्यन् यः श्राद्धं पूर्वरात्रौ प्रयत्नतः ।

व्यवायं भोजनंचैव ऋतौ चाऽपि विवर्जयेत् ॥
रेतोगर्ते पातयति स्त्रियं गत्वा निमन्त्रितः ।
करिष्यंश्च तथा भुक्त्वा स्वपितॄन् शाश्वतीः समाः ॥

बृहस्पतिरपि—

द्विनिशी ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धिकैस्सह ।
अन्यथा वर्तमानौ तु स्यातां निरयगामिनौ ॥
पुनर्भोजनमध्वानं भारयामासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वप्नं च स्वेच्छया ॥

यमः—

पुनर्भोजनमध्वानं भाराऽध्ययनमैथुनम् ।
सन्ध्याम्प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत् ॥

धर्मसारसुधानिधौ—

ब्रह्महत्यामवाप्नोति यदि स्त्रीगमनं चरेत् ।
अध्वानं कलहं क्रोधं पुत्रभार्यादिताडनम् ॥
श्राद्धभोजी भवेद्योहि तद्दिने परिवर्जयेत् ।
श्राद्धेनियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य वा ॥
व्यावाये रेतसोगर्त्ते पातयत्यात्मनः पितॄन् ।
श्राद्धं दत्त्वा च भुक्त्वा च सङ्गमश्च समाचरेत् ॥
पितरस्तस्य तन्मासं भवन्ति रेतभोजनाः ।

वसिष्ठः—

यस्तयोर्जायते गर्भो दत्त्वा भुक्त्वा च पैतृकम् ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥
श्राद्धं दत्त्वा च भुक्त्वा वा प्यध्वानं योऽधिगच्छति ।
पितरस्तस्य तन्मासं भवन्ते पांसुभोजनाः ॥
श्राद्धं दत्त्वा च भुक्त्वा च भारमुद्वहते द्विजः ।
पितरस्तस्य तन्मासं भवन्ते भारपीडिताः ॥

अन्येऽपि कर्तृनियमा उच्यन्ते । सोमोत्पत्तौ—

वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां भ्रूणहत्यायां युज्यते नाऽत्रसंशयः ॥

एतत् कर्मार्थाद्व्यतिरिक्तविषयम् , इध्माद्याहरणस्य तस्यामेव विहितत्वात् ।

वनस्पतिगते सोमे अनडुहो यस्तु वाहयेत् ।
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च ॥
वनस्पतिगते सोमे मन्थानं यस्तु कारयेत् ।
गावस्तस्य प्रणश्यन्ति चिरकालमुपस्थिताः ॥
वनस्पतिगते सोमे स्त्रियं वा योऽधिगच्छति ।
स्वर्गस्थाः पितरस्तस्य च्यवन्ते नाऽत्र संशयः ॥

इति कर्तृभोक्तृनियमाः ।

इति श्रीमहाराजाऽधिराजसहगिलान्वयैकभूषण परमानन्दादिष्ट 'धर्माधिकारि' श्रीरामपण्डितात्मज पण्डित विनायक कृतायां श्राद्धकल्पलतायां देशद्विज-कर्तृनियमनिरूपणस्तवको द्वितीयः ॥ २ ॥

अथ स्नात्वा कर्माऽधिकारसिद्ध्यर्थमूर्ध्वपुण्ड्रं धारयेत् ।

तथाच हेमाद्रौ—

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
तत्सर्वं नश्यति क्षिप्रमूर्द्ध्वपुण्ड्रं विना कृतम् ॥ इति ।

सङ्ग्रहे तु—

वामहस्ते तु दर्भांश्च गृहे रङ्गवालिं तथा ।
ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः ॥ इति ।

अन्यच्च—

ऊर्द्ध्वं पुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः ।
श्राद्धकालेऽनुसम्प्राप्ते कर्ता भोक्ता च तत् त्यजेत् ॥ इति ।

अत्र वृद्धाचारतो व्यवस्थाद्रष्टव्या। तिर्यक् पुण्ड्रस्य निषेधउक्तो हेमाद्रौ—

तिर्यक् पुण्ड्रं तथा दृष्ट्वा स्कन्धे माल्यन्तथैव च।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्॥ इति।

तदेतद्गन्धेन तिर्यक् पुण्ड्रधारणविषयं माल्यसाहचर्यात्।

प्राक् पिण्डदानाद्गन्धाद्यैर्नाऽलङ्कुर्यात्स्वविग्रहम्।

इत्याश्वलायनाऽऽचार्यवचनात्। आचार्येणाऽप्यन्ये नियमा उक्ताः—

दानाऽध्ययनदेवार्चाजपहोमव्रतादिकान्।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात्॥ इति।

अत्र देवार्चनजपहोमनिषेधस्तु नित्यव्यतिरिक्तविषयः। तेषां नित्यकर्मणां कालात्यये दोषस्मरणात् अनन्यगतिकत्वाच्चेति।

श्राद्धेऽह्नि भोजयेद्वास्तौ न बालानपि यत्नतः।
प्राक् पिण्डदानाद्गन्धाद्यैर्नाऽलङ्कुर्यात्स्वविग्रहम्॥

वास्तौ गृहे।

स्त्रीकर्तृकनियमाः उक्ताः—पाद्मे—

मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च।
हसते रुदते चैव निराशाः पितरो गताः॥ इति।

अथ पाकारम्भप्रकार उच्यते। तत्र तावद् भूम्यादिशुद्धिः कार्येत्याहोशनाः—

'गोमयादिकैर्भूमिभाजनभाण्डशौचं कुर्यात्' इति। भूमिर्गृहप्रवेशः। भाजनं पाकपात्रम्। भाण्डं तण्डुलादिपूरणपात्रम्। शौचं गोमयेनाभ्युक्षणम्।

देवलस्तु शुद्ध्यन्तरमाह—

तिलानाविकरेत्तत्र सर्वतो बन्धयेदजान्।
असुरोपहतं सर्वं तिलैः शुध्यत्यजेन च॥

तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ॥ इति ।
समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः ।
कृतोपकारिभिश्चाऽपि पितृकार्यञ्च शस्यते ॥

अथ पचनभाण्डान्युच्यन्ते ।

तत्र हेमाद्रावादित्यपुराणम्—

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा द्विजः ॥
अच्छिद्रेष्वविक्लिन्नेषु तथाऽनुपहतेषु च ।
नायसेषु न भिन्नेषु दूषितेष्वपि कर्हिचित् ॥
पूर्वं कृतोपयोगेषु मृन्मयेषु न तु क्वचित् ।

चमत्कारखण्डे—

पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च ॥
समुद्धरति वै घोरात् पितॄन् दुःखमहाऽर्णवात् ।
तैजसानाम भावे तु पिठरे(१) मृन्मयेऽपि च ॥
नैवाऽशुचौ प्रकुर्वीत पाकं पित्रर्थमादरात् ।
तस्य तुष्यन्ति पितरः प्रीता यच्छन्ति वाञ्छितम् ॥

अथः पात्रेषु पचने दोषः स्मर्यते—

न कदाचित्पचेदन्नमयःस्थालीषु पैतृकम् ।
अयसो दर्शनादेव पितरो विद्रवन्ति हि ॥
कालायसं विशेषेण निन्दन्ति पितृकर्मणि ।
फलानाञ्चैव शाकानां छेदनाऽर्थानि यानि तु ॥
महानसेऽपि शस्तानि तेषामेव हि सन्निधिः ।
इष्यते नेतरस्याऽत्र शस्त्रमात्रस्य दर्शनम् ॥

---

(१) 'पितॄणां' इति क. ख. ग. पुस्तकेषु पाठः ।

श्राद्धदेशे तु विदुषां पितॄणां प्रीतिमिच्छता।
महानसेऽपि युक्तानामपि कार्यं न दर्शनम्॥

अत्र पक्वान्नस्थापनादौ विशेष उच्यते आदित्यपुराणे—

पक्वान्नस्थापनार्थन्तु शस्यन्ते दारुजान्यपि।
दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः॥ इति।

इति पाकारम्भनियमाः।

अथ पाकार्हद्रव्याण्युच्यन्ते।

चन्द्रिकायां ब्रह्माण्डपुराणे—

कृष्णमाषतिलाश्चैव श्रेष्ठाःस्युर्यवशालयः।
महायवा व्रीहियवास्तथैव च मधूलिकाः॥

मधूलिका भाषायां=खर्बुजा=इतिप्रसिद्धाः।

कृष्णश्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि॥

यवादयो लोहान्ताश्च व्रीहिधान्यविशेषाः।

अगोधूमश्च यच्छ्राद्धं कृतमप्यकृतं भवेत्॥
तृप्ताःस्युः पितरो यस्मादभावे पायसादयः॥

हेमाद्रौ ब्रह्मवैवर्त्तपुराणे—

गोधूमाश्च यवाश्चैव समूहा रक्तशालयः।
एते सोमात्समुद्भूताः पितॄणाममृतं ततः॥
तस्मात्तत्प्रयतैर्देया एते श्राद्धेषु वंशजैः।

भविष्यपुराणे—

क्षीरं क्षीरविकारांश्च पायसं शर्करा मधु।
देयं श्राद्धेषु यत्नेन सर्वदा पितृतृप्तये॥

शाकादीन्युच्यन्ते वायुपुराणे—

तिलाः श्यामाकनीवारा गोधूमा व्रीहयो यवाः।
महायवा व्रीहियवास्तथैव च मधूलिकाः॥
कालशाकं(१) महाशाकं द्रोणशाकं तथार्द्रकम्।

---

(१) 'मूमा' इति भाषायां प्रसिद्धम्।

बिल्वामलकमृद्वीका पनसाम्रातदाडिमम् ॥
चव्यं पालेवताक्षोटखर्जूरश्च कसेरुकम् ।
कोविदारश्च कन्दश्च पटोलं बृहतीफलम् ॥
पिप्पली मरिचं चैव एला शुण्ठी तु सैन्धवम् ।
शर्करागुडकर्पूरबदरीद्रोणपत्रकम् ॥
सर्वं गव्यविकाराणि प्रशस्तानि च पैतृके ।
मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ॥
श्राद्धकर्माणि शस्तानि सैन्धवं त्रपुसं तथा ।

रामठम्=हिङ्गु । वायुपुराणे—

श्यामाका हस्तिनामानो विद्धि यज्ञविनिःसृतान् ।
प्रमासिका प्रियङ्गुश्च मुद्गाश्च हरितास्तथा ॥
एतान्यपि समानि स्युः श्यामाकानां गुणैर्द्विजाः ।
कसेरुः कोविदारश्च नालकन्दस्तथा बिसम् ॥
तमालं शतकन्दश्च तथा वै शितकन्दकम् ।
कालेयं कालशाकञ्च सुनिषण्णं सुवर्चलम् ॥
मांसं शाकं दधि क्षीरं शस्तं वेत्राङ्कुरस्तथा ।
कट्फलं कोकनिद्राक्षा(१) लकुचं मोचमेव च ॥
अलाबु ग्रीवकं चारु कर्कन्धु मकसाव्हयम् ।

कर्कन्धुविशेषणानि अलाबुग्रीवकमित्यादीनि ।

वैकङ्कतं नारिकेरं शृङ्गाटकमरूषकम् ।
पिप्पली मरिचं चैव पटोलं बृहतीफलम् ॥
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।
नागरं चाऽत्र वै देयं दीर्घमूलकमेव च ॥ इति ।

प्रसासिकाख्यं (२)धान्यम्, कसेरुः कूलजो मूलविशेषः । कोवि-

(१) 'कीकाति द्राक्षा' इति घ पुस्तक पाठः ।
(२) 'पसाही' इति भाषायाम् ।

दारः श्वेतकाञ्चनारसदृशः। नालकन्दो वालमूली। शतकन्दः शतावरी। शितकन्दं शालूकं करालाख्यं शाकम्। सुनिषण्णा चाङ्गेरीसदृशं शाकम्। सुवर्चलं शाकविशेषः। कोङ्कणदेशोद्भवा कोङ्कणीद्राक्षा। मोचं कदलीफलम्, कर्कन्धू(१) बदरी। शृङ्गाटकं जलोद्भवमूलविशेषः। तत्साहचर्यात् मरूषकमपि तथैव। नागरं सुंठी। इतराणि-चाभिधानतो देशविशेषनिवासिभिस्त्ववगन्तव्यानि। एवमादीन्यन्यान्यपि विहितानि स्मृत्यन्तरतोऽवगन्तव्यानि। यच्च स्मृतिकारैः-श्राद्धे मांसस्य प्राशस्त्यमुक्तम् तत् कलियुगेतरविषयम्।

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

इति निगमवाक्येन निषिद्धत्वात्। तथा बृहन्नारदीये द्वाविंशेऽध्याये।

द्विजस्याब्धौ तु नौयातुः शोधितस्याऽपि सङ्ग्रहः।
नकार्यः—(२)
समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपगतं तथा॥
देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः।
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः॥ इति।

बृहत्पाराशरीयेऽपि—

शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि।

---

(१) 'कर्कन्धूर्बदरीकोलिः' इत्यमरः।
(२) अयं श्लोको घ पुस्तके नास्ति।

अनन्ततृप्तिकं श्राद्धे एतत्खलु, न चामिषम् ॥

तथा—

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत्पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे यथा किञ्चिद्बालः प्राप्तुं तदिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥ इति ।

श्रीभागवतेऽपि सप्तमस्कन्धे, पञ्चदशेऽध्याये—

न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया ॥ (श्लो० ७)
नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।
न्यासोदण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ इति । (श्लो० ८)

अयञ्चाऽर्थो हेमाद्रिमाधवीयमदनरत्नपृथ्वीचन्द्रोदयस्मृतिरत्नावलीस्मृतिचन्द्रिकादिवोदासप्रकाशदीपिकाविवरणाद्यनेकग्रन्थेषु धर्मज्ञसमयमूलककलिवर्ज्यगणने

"वरातिथिपितृभ्यश्च पशूपाकरणक्रिया"

इति वाक्यानुरोधेन श्राद्धेषूपाकरणनिषेधान्मांसनिषेधइत्यभिधाय निर्णीतः। याच वर्णव्यवस्था पुलस्त्येनोक्ता—

मुन्यन्नं ब्राह्मणस्योक्तं, मांसं क्षत्रियवैश्ययोः ।
मधुप्रदानं शूद्रस्य सर्वेषाञ्चाऽविरोधि यत् ॥ इति,

सापि कलियुगाऽतिरिक्तविषयेति । अन्यच्च कलिमांसनिषेधसाधकं युक्तिमुक्ताकदम्बकमस्माभिर्मांसमीमांसायामतिविस्तरेणाविष्कृतमिति नेहोच्यते विस्तरभयात् ।

## अथ वर्ज्यानि।

तत्र शङ्खः—

मूतृणं सुरसं सिग्रुं पालक्यं मधुकं तथा ।
कूष्माण्डालाबुचोर्वारुकोविदारांश्च वर्जयेत् ॥
पिप्पलीमरिचञ्चैव तथा वै पिण्डमूलकम् ।

कृतश्च लवणं सर्वं वंशाग्रञ्च विवर्जयेत् ॥ इति ।

कोविदारपिप्पलीमरीचवंशाकुरूणां विहितप्रतिषिद्धत्वाद्विकल्पः । एवं हिंगुबीजपूरादीनामपि ज्ञेयम् । अथवा पिप्पलीमरीचयोः शाकादिनिक्षिप्तयोः प्रत्यक्षयोर्निषेधः । हिंगुनिषेधः शाकेषु फलव्यञ्जनेषु ।

तथाच वर्ज्यप्रकरणे व्यासः—

'हिंगुद्रव्येषु शाकेषु' इति शाकविशेषणम् । अन्यथा द्रव्येष्वित्यनेनैव सिद्धे शाकपदं व्यर्थं स्यात् ।

ब्रह्माण्डपुराणे—

आसनारूढमन्नाद्यं पादोपहतमेव च ।
अमेध्यैर्जङ्गमैःस्पृष्टं शुष्कं पर्युषितं च यत् ॥
द्विःस्विन्नं परिदग्धंच तथैवाग्रावलेहितम् ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितञ्चैव तथातिलवणञ्च यत् ।
सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टाश्च तथा दुष्टाश्चोपहतास्तथा ।
वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि ॥
राजमाषास्तथा चैव वर्ज्याः सद्भिः प्रयत्नतः ।
आविकं मार्गमौष्ट्रञ्च सर्वमैकशफं च यत् ।
माहिषं चामरञ्चैव पयो वर्ज्यं विजानता ॥

द्विःस्विन्नं शाकादिसंस्कारार्थं जीरकादिप्रक्षेपेण यत्पुनः पक्वम् । अत एव पाकादावेव संस्कारः कर्तव्यः । यद् व्यञ्जनादेरौष्ण्यापगमेऽपि पुनरुष्णताऽऽपाद्यते सोऽपि द्वितीयः पाकः, स च वर्जनीयः । अग्रावलेहितम् उपयुक्तभागम् । सिद्धाः कृताः सन्त इति । येषु सिद्धेषूत्तरकालं प्रत्यक्षलवणप्रक्षेपःकृतस्ते तादृशाः ।

विश्वामित्रः—

कोद्रवा राजमाषाश्च मसूराश्च कुलत्थकाः ।

सत्कवश्चाढकीकृष्णजीरकं काञ्चनालकम् ॥
कुसुम्भमतसी चैव बिडाललवणं तथा ।
एरण्डकाः कृष्णमाषा आविकं माहिषं तथा ॥
गन्धारिका मर्कटी च महासर्षपमूलकम् ।
कृष्णसर्षपपत्रं च करीरं काञ्चनालकम् ॥
कपित्थं कुतकश्चैव नालिकेरं च पैतिकम् ।
अलाबु शतपुष्पी च कूष्माडं पूतिगन्धि च ॥
पतितस्पर्शितं दृष्टं क्रियामुद्दिश्य याचितम् ।
जम्बूफलविपकश्च पिण्याकं तण्डुलीयकम् ॥
सर्वं पर्युषितश्चैव आच्क्रान्तं वाऽवधूनितम् ।
परिदग्धमदग्धं च वर्जयेच्छ्राद्धकर्मणि ॥

नित्यभोजनादौ प्रतिषेधकशास्त्रेषु यद्भक्ष्यं कीर्तितं तत्सर्वं श्राद्धे वर्ज्यमिति ।

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्माणि ।
न वर्जयेत्तिलांश्चैव मुद्गमाषांस्तथैव च ॥
कोद्रवान् राजमाषांश्च कुलत्थान्वरकांस्तथा ।
निष्पावांस्तु विशेषेण पश्चैतांश्च विवर्जयेत् ॥ इति ।

वरकाः वनमुद्गाः । निष्पावाः कृष्णनिष्पावाः । कूष्माण्डं महिषीक्षीरम् । आढक्यो राजसर्षपाः ।

चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः ।
पिण्डालुकश्च तुण्डीलं करमर्दश्च नालिका ॥
कूष्माण्डं बहुबीजानि श्राद्धे दत्त्वा व्रजत्यधः ।
बिडालोच्छिष्टमाघ्रातं श्राद्धे यत्नेन वर्जयेत् ॥

स्मृत्यन्तरेऽपि वर्ज्यमुक्तम्—

अतिशुक्लाऽऽम्ललवणं विरसं भावदूषितम् ।
राजसं तामसं चैव हव्यकव्येषु वर्जयेत् ॥ इति ।

राजसतामसाहारा उक्ताः श्रीगीतायाम्—

कट्वम्ललवणात्युष्णतिक्ता रूक्षविदाहिनः ।
आहारा राजसश्रेष्ठा दुःखशोका भयप्रदाः ॥
यातयामं गतरसं पूतिपर्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसं स्मृतम् ॥
आयुः सत्त्वबलारोग्य सुखप्राप्तिविवर्धनाः ।
रस्याः स्निग्धा स्थिराहृद्या आहाराः सात्विकप्रियाः ॥

एवं वर्ज्यानि पयांस्याह याज्ञवल्क्यः—

सन्धिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत् ।
औष्ट्रमैकशफंस्त्रैणमारण्यकमथाविकम् ॥ ( १—१७० )

वृषाक्रान्ता सा सन्धिनी । अथवा एकस्मिन्नेव काले दुह्यमाना सा सन्धिनी । अथवा या वत्सान्तरसन्धानेन दुह्यते सा सन्धिनी । यस्याः प्रसूतायाः दशदिनान्यनतिक्रान्तानि सा अनिर्दशा । अवत्सा मृतवत्सा ।

सुमन्तुः—

पयो दधि घृतञ्चैव गवां श्राद्धेषु पावनम् ।
महिषीनां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित् ॥

षट्त्रिंशन्मते—

क्षीरादि माहिषं वर्ज्यमभक्ष्यं यच्च कीर्तितम् ॥ इति ।

क्षीरादीति–पयोदधिनी गृह्येते । 'माहिषञ्च पयो दधि'इति भारद्वाजस्मरणात् । 'अभक्ष्यं यच्च कीर्तितम्'इतिपुरुषार्थतया प्रतिषेधकशास्त्रेषु यद् भक्ष्यं कीर्तितं, तच्च सर्वं श्राद्धकर्मणि न देयमित्यर्थः । मासतृप्तिकरणानि—

"तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥ इति ।

कात्यायनोऽपि—

"ग्राम्यादिभिरोषधीभिर्मासंतृप्तिस्तदभावे मूलफलैरद्भिर्वा सहान्नेनोत्तरांस्तर्पयन्ति" इति।

मार्कण्डेयोऽपि—

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि।(१)
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥

सतीनाः कलायाः। 'कलायस्तु सतीनकः' इत्यमरः (२।९।१६)। कलायो वर्तुलाकारश्चणकः। चणकाः प्रसिद्धाः।

सायणीये—

अगोधूमश्च यच्छ्राद्धं माषमुद्गविवर्जितम्।
तैलं पक्केन रहितं कर्तुरायुःक्षयो भवेत्।

नारदीयपुराणे—

भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं तथैव च।
पञ्चप्रकारं ह्यशनं हृद्यं गन्धरसान्वितम्॥

अन्यत्राऽपि—

भक्ष्यैर्भोज्यैश्च लेह्यैश्च चोष्यैः पेयैः सखाण्डवैः।
ग्राम्याभिरोषधीभिश्च मासं सन्तर्पयेत्पितॄन्॥

यत्तु काठिन्यातिशयाद्दन्तैः प्रयत्नेन खण्डयित्वा भक्ष्यते तद्भक्ष्यम्। यथा मोदकादि। अनायासेन चर्वणीयं भोज्यम्। यथा भक्तादि। रसनापरिस्पन्दमात्ररसनीयं लेह्यम्। यथा प्रलेहादि। यस्य तु वदनव्यापारेण रसमात्रपानं तच्चोष्यम्। यथा इक्षुकाण्डादि। मुखमारुतमात्रप्राश्यं पेयम्। यथा क्षीरादि। साम्लमासत्वान्य(धान्य)फलमूलादिनिर्यासः खाण्डवः। मुद्गव्रीहियवतिलमाषप्रियङ्गुगोधूमाः सप्त ग्राम्योषधयः।

मार्कण्डेयस्तु—

विदार्या च भुसुण्डैश्च तिलैः शृङ्गाटकैस्तथा।

(१) सतिलैश्चरणैरपि' इति ख. पुस्तके पाठः।

केतुकैश्च तथा कन्दैः कर्कन्धुबदरैरपि ॥
पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा ।
काकोल्या क्षीरकाकोल्या तथा पिण्डालकैः शुभैः ॥
लाजाभिश्च शणाभिश्च त्रपुसैर्वा तु चिर्भटैः ।
सर्षपाराजशाकाभ्यां हिङ्गुदै राजजम्बुभिः ॥
प्रियालामालकैर्मुख्यैः फल्गुभिश्च तिलम्बकैः ।
वेत्राङ्कुरैस्तालकन्दैः स्वकुकाक्षीरिकावचैः ॥
लोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैः सुसंस्कृतैः ॥
रागषाडवचोष्यैश्च(१) त्रिजातकसमान्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम् ॥ इति ।

विदारी कृष्णवर्णा भूकूष्माण्ड(२)फलम् । केचुकः कचूराख्यः शाकः । कन्दः सूरणः । उर्वारुः स्वादुकर्कटी (३)चिर्भटस्तिक्तकर्कटी । सर्षपेति दीर्घः छान्दस । राजशाकं कृष्णसर्षपः । इङ्गुदी तापसतरुः । प्रियालो राजादनम् । चाक्रिका चिञ्चा । क्षीरिका फलाध्यक्षम् । त्रिजातकं लवङ्गैलागन्धपत्राणि ।

अन्यायोपार्जितैरर्थैर्यत् श्राद्धं क्रियते नरैः ।
तृप्यन्ति तेन चाण्डाला इत्याह भगवान्विभुः ॥
यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम् ।
अन्यायकन्याशुल्कोत्थं द्रव्यं चात्र विगर्हितम् ।
पित्रर्थं मे प्रयच्छेत्युक्त्वा यच्चाप्युपार्जितम् ॥
वर्जनीयं सदा सद्भिस्तत्तद्वै श्राद्धकर्मणि ।

उत्कोचादिना स्तेयादिना । कन्याशुल्कं गोमिथुनादधिकम् ।

अथ जलानि । याज्ञवल्क्यः—

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् । इति (१।१९२)

(१) 'खाडव' इति ख पुस्तके पाठः (२) कोहळा इति ख्यातः ।
(३) कांकडी इति ख्यातः ।

अथ वर्ज्यजलानि। पारिजाते—

दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम्।
न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते॥
यच्च सर्वार्थमुत्सृष्टं यच्चाऽभोज्यं निपानजम्।
तद्वर्ज्यं सलिलं तात सदैव श्राद्धकर्मणि॥ (१)इति।

यच्च सर्वार्थमुत्सृष्टं सर्वप्राण्युपजीवनार्थं यत्कल्पितं कूपादि तद्वर्ज्यम्। निपानं कूपसमीपे कृतपश्वादीनामुदकपानार्थो जलाशयः।

बृहस्पतिः—

त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं जलम्।
न त्यजेज्जान्हवीतोयं तुलसीपद्मबिल्वजम्॥

एवमुक्तप्रकारेण श्राद्धार्हद्रव्यैः पाकं कारयित्वा निमन्त्रित ब्राह्मणाह्वानार्थं परिवारकान्प्रेष्यार्चनसाधनद्रव्याणि सज्जीकुर्यात्।

अत्र मार्कण्डेयः—

अह्नः षट्सु मुहूर्तेषु गतेषु प्रयतान् द्विजान्।
प्रत्येकं प्रेषयेत्प्रेष्यान् प्रदायामलकोदकम्॥

ब्राह्मणानां स्नानार्थं परिचारकानां हस्तेषु आमलककल्कं(२) प्रदाय ब्राह्मणेभ्यः प्रत्येकं दीयतामिति प्रेषयेत्। अत्राऽऽमलकग्रहणं तैलक्षुरकर्मोपदर्शनार्थम्।

तथाच देवलः—

ततो निवृत्ते मध्याह्ने लुप्तलोमनखान् द्विजान्।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम्॥
तैलमभ्यञ्जनस्नानं स्नानीयञ्च पृथग्विधम्।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम्॥
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः।

---

(१) अयंश्लोकः ख पुस्तके नास्ति।
(२) "आंवला चूर्णम्" इत्यर्थः।

पाद्यमाचमनीयं च सम्प्रयच्छेद्यथाक्रमम् ॥ इति ।

उदुम्बरं ताम्रम् । आसादनीयान्युच्यते ग्रन्थान्तरे ।

उपमूलसकृल्लूनान्कुशांस्तत्रोपकल्पयेत् ।
एवं तिला वृसी कांस्यमापः शुद्धैः समाहृताः ॥
पार्णराजतताम्राणि पात्राणि स्युः शमी मधु ।
पुष्पं धूपं सुगन्धादि क्षौमसूत्रं च मेक्षणम् ॥

वृसी निमन्त्रितब्राह्मणानामुपवेशनार्थान्यासनानि । 'ऋषीणामासनं वृसी' इत्यमरः' । बृसीतिपाठान्तरम् ।

अथ कुतपाः—

मध्याह्नः सङ्गपात्रञ्च (१)तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रः कुतपाः स्मृताः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

तत्र कुशोत्पाटनक्रममाह कार्ष्णाजिनिः—

भुवन्तु शिथिलीकृत्य खनित्रेण विचक्षणः ।
आदद्यात्पितृतीर्थेन पठन् हुं फट् सकृत् सकृत् ॥ इति ।

तस्य लक्षणमुक्तं हेमाद्रौ—

अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलाः कुतपा प्रोक्ताः छिन्नाग्रास्तृणसंज्ञकाः ॥
हरिता वै सपिञ्जूलाः (२)पुष्टाः स्निग्धाः समाः शुभाः ।
रत्निमात्रप्रमाणाः स्युः पितृतीर्थेन संस्कृताः ॥
अच्छिन्नाग्रा ह्यशुष्काग्रा ह्रस्वाश्चैव प्रमाणतः ।
कुतपा इति विज्ञेया तैस्तु श्राद्धं समापयेत् ॥

अ॰ उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपास्तिलाः ॥

(१) "खड्गपात्रञ्चेति" ख पुस्तके पाठः ।
(२) 'पिंसाग्राः' इति ग पुस्तके पाठः ।

दौहित्रपदं वृद्धशातातपेन व्याख्यातम्—

दुहित्रं खड्गमृगस्य ललाटे यत् प्रदृश्यते ।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमिति कीर्तितम् ॥

स्मृत्यन्तरे—

अमावास्यां गते सोमे यातु खादति गौस्तृणम् ।
तस्या गोर्यद्भवेत्क्षीरं तद्दौहित्रमुदाहृतम् ॥

दौहित्रो दुहितुः पुत्रः सतूपनीत एव । उच्छिष्टं पयः । शिवनिर्माल्यं गङ्गोदकम् । वमनं मधु । मृतकर्पट तसरीतन्तुनिर्मितं वासः ।

वर्जनीयानाह सङ्ग्रहे—

चितौदर्भाः पथिदर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥
अमूला गर्भितादर्भा ये छिन्नाग्रा नखैस्तथा ।
कुत्सितान्नखदग्धांश्च कुशान् यत्नेन वर्जयेत् ॥

गर्भितो गर्भदलयुक्तः । कुशाभावे काशाः ।

कुशाऽभावे द्विजश्रेष्ठ काशैः कुर्वीत यत्नतः ॥
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः ।
श्राद्धेषु वैश्वदेवानि यानि कर्माणि कानिचित् ॥
यवैरेव विधीयन्तां तानि श्रोत्रियपुङ्गवैः ।
यवैरर्घो यवैर्दानं यवैरर्चा यवैर्हविः ॥
वैश्वदेवे तु यत्र स्यात् तृप्तिस्तत्र हि शाश्वती ।
तिला विष्णोः समुद्भूतास्ततस्ते परमं हविः ॥
तिलैः श्राद्धाच्च होमाच्च जगत्प्रीणाति भार्गव ।

अत्र मधुदानमावश्यकमुक्तं नागरखण्डे—

ओषधीनां हि सर्वासां परमो वै रसो मधुः ।
सर्वान्नानामयं सारो विश्रुतो मधुसंज्ञया ॥

१ श्रा० क०

देवानाञ्च पितॄणाञ्च तदेतदतिवल्लभम् ।
अतः श्राद्धन्न कर्तव्यं किञ्चिञ्च मधुना विना ॥
मधुना रहिते श्राद्धे निराशाः पितरो गताः ।
देवाश्च पितरश्चैव मधुना तर्पिता ध्रुवम् ॥
सुधारसेन तृप्यन्ति यावदाभूतसम्प्लवम् ।
कथञ्चिद्यदि विप्रेभ्यो न दत्तं भोजने मधु ॥
पिण्डास्तु नैव दातव्याः कदाचित् मधुना विना ।
अपश्च सृजता पूर्वं मधुसृष्टं स्वयम्भुवा ॥
तेन तच्छस्यते श्राद्धे यदि न स्यात्समाहितैः ।
ततोऽपि कीर्तनीयं स्यात्पितॄणां तृप्तये तदा ॥

अनेन मधुदानेन येन केनचित् द्रव्यादिना विकलं श्राद्धं सफलम्भवतीत्युक्तम् ।

स्कन्दपुराणे तत्र ऋषिवाक्यम्—

खड्गमांसेन मधुना कालशाकेन भूरिशः ।
विधिहीनं द्विजैर्हीनं तिलदर्भविवर्जितम् ॥
स्वजातीयान् द्विजाभासान् भोज्याऽऽचारविवर्जितान् ।
कृतं मया पुरा श्राद्धं श्रद्धाहीनमपि द्विजाः ॥
श्राद्धस्य तादृशस्याऽपि फलमेतन्ममागतम् । इति ।

तदेतद्युगान्तरविषयम् । कलौ श्राद्धे मधुदानस्य निगमवाक्येन निषिद्धत्वादिति । वाक्यं च दर्शितं प्राक् ।

## अथ पादप्रक्षालनविधिः ।

तत्र शम्भुः—

संमार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले ।

द्वारि द्वारसमीपे—

प्राङ्गणे मण्डलं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
नोत्तरे दक्षिणे वाऽपि पश्चिमे न गृहान्तरे ।
उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम् ॥

तत्प्रमाणमुक्तं सङ्ग्रहे—

प्रादेशमात्रं देवानां मण्डलं चतुरस्रकम्‌ ।
वितस्तिमात्रं पित्र्ये तु मण्डलं वर्तुलं भवेत्‌ ॥
यज्ञोपवीति देवार्थे पित्र्यर्थे वाऽपसव्यवत्‌ ।
अनन्तरं प्रकुर्वीत तयोर्मध्ये षडङ्गुलम्‌ ॥ इति

स्मृत्यन्तरे तु--

गर्तः पञ्चाङ्गुलो विप्रे जानुमात्रो महीभुजि ।
प्रादेशमात्रो वैश्ये च साधिकः स तु शूद्रके ॥
तिर्यगूर्ध्वप्रमाणेन खातव्यो दैवपित्र्ययोः ।
चतुरस्रं वर्तुलञ्च कथितं गर्तलक्षणम्‌ ॥
पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान्‌ ।
तिष्ठतां क्षालनं कुर्यात्‌ निराशाः पितरो गताः ॥

गौतमः--

तिष्ठन्‌ प्रक्षालयेत्पादौ दैवे पित्र्ये च कर्मणि ।
देवा हव्यं न गृण्हन्ति कव्यानि पितरस्तथा ॥

वसिष्ठः—

दिवा वा यदि वा रात्रौ न कुर्यात्‌ प्राङ्मुखः शुचिः ।
प्रत्यङ्मुखस्तु कुर्वीत विप्रपादाऽभिषेचनम्‌ ॥

स्मृत्यन्तरे--

श्राद्धकाले यदा पत्नी वामे नीरं प्रदापयेत्‌ ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

तत्राऽऽचमनादिग्नियम उच्यते सङ्ग्रहे--

मण्डलस्योत्तरे भागे विप्रस्याचमनक्रिया ।
अमृतं स पिबेत्तोयं रुधिरं दक्षिणे तथा ॥

अन्तःप्रक्षालने दोषमाह सङ्ग्रहकारः--

नान्तः प्रक्षालयेत्पादौ कर्ता पित्रादिकर्मसु ।
अज्ञानाद्यदि वा कुर्यात्‌ पातयत्युभयङ्कुलम्‌ ॥

अथाऽऽसनानि—

क्षौमं दुकूलं नेपालमाविकं दारुजं तथा ।
तार्णं पार्णं वृसीचैव विष्टरादि प्रविन्यसेत् ॥ इति
शमी च काश्मरी शल्लः कदम्बो वरणस्तथा ।
पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा ॥
अयःशङ्कुमयं पीठं प्रदेयं नोपवेशनम् ।

तथा पुलस्त्यः—

श्रीपर्णी वरुणी क्षीरि जम्बुकाम्रकदम्बकम् ।
सप्तमं वाकुलं पीठं पितॄणां दत्तमक्षयम् ॥

पालाशवटाश्वत्थोदुम्बरमधूकमृन्मयगोमयनैम्बलोहवद्धदग्धा-सनानि वर्जयेत् ।

पालाशवटवृक्षोत्थमश्वत्थं शाकवृक्षकम् ।
मृत्तिकोदुम्बरं पीठं माधूकञ्च विवर्ज्जयेत् ॥

वायुपुराणे—

श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ।
निम्बो विनीतकश्चैव श्राद्धकर्मणि गर्हितम् ॥
विरिविल्वस्तथा कोल्लं तिन्दुकाम्रातकौ तथा ।
बकुलः कोविदारश्च एते श्राद्धेषु गर्हिताः ॥

अथार्घ्यपात्राणि—

खदिरोदुम्बरावर्घ्यपात्राणि श्राद्धकर्मणि ।
मण्यश्ममृन्मयानि स्युरपि पर्णपुटास्तथा ॥

ब्रह्माण्डपुराणे—

सौवर्णं राजतं ताम्रं मणिपात्रमथाऽपि वा ।
खड्गमम्भोजकांस्यं वा एकद्रव्येष्वथाऽपि वा ।
चमसं पर्णकांस्यं वा मृन्मयं वा प्रकल्पयेत् ॥

अत्र बीजवापः—

तीर्त्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् ।

एकस्मिन्‌ वा बहुषु वा ब्राह्मणेषु यथाविधि ॥

तीर्त्वा तिलानर्घ्योदके प्रक्षिप्येदित्यर्थः ।

मनुरपि—

अन्नाभावे द्विजाऽभावे यद्येको ब्राह्मणो भवेत्‌ ।
पात्राण्यासादयेत्त्रीणि न तु ब्राह्मणसंख्यया ॥

उद्देश्यस्य संख्यया पात्रासादनङ्कार्यम्‌, नतु ब्राह्मणसंख्यया ।

अथ गन्धस्वरूपम्‌ ।

ब्रह्मपुराणे—

श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि च ।
विलेपनार्थं दद्यात्तु प्रीतिदं पितृवल्लभम्‌ ॥ इति

मार्कण्डेयपुराणे—

चन्दनागरुकर्पूरकुङ्कुमानि प्रदापयेत्‌ ।
अश्वमेधमवाप्नोति पितॄणामनुलेपनात्‌ ॥

अथ वर्ज्यान्याह मरीचिः—

श्राद्धेषु विनियोक्तव्या न गन्धा देवदारुजाः ।
कल्कीभावं(१) समासाद्य न च पर्युषितं तथा ॥
नाऽतिगन्धाश्च दातव्या भुक्तशेषावशेषिताः ।
पूतिकं मृगनाभिश्च रोचनं रक्तचन्दनम्‌ ॥
कालीयं जोंगकञ्चैव रुतुष्कं वाऽपि वर्जयेत्‌ ।

पूतिकं सुगन्धितृणविशेषः । मृगनाभिः कस्तूरी । रोचना गोरोचना । रक्तचन्दनं प्रसिद्धम्‌ । कालीयजोंगकौ गन्धविशेषौ । रुतुष्कः सल्लकः । गन्धदाने विशेष उक्तो मदनपारिजाते व्यासेन—

सपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत्‌ ।
धूपश्च धूरसीत्युक्त्वा दीपाज्योतिरिदश्च ते ॥

---

(१) "बहुद्रव्यमिश्रितम्‌" इत्यर्थः ।

गन्धदानं पवित्रसहित एव कुर्यात् । विलेपने तु विशेषमाह वृद्धशातातपः—

पवित्रं तु करे कृत्वा यः समालभते द्विजान् ।
राक्षसानां भवेच्छ्राद्धं निराशाः पितरो गताः ॥

समालम्भनमनुलेपनम् ।

तथाच व्यासः—

करे पवित्रं कृत्वा तु गन्धं यस्तु विलिम्पति ।
पितृयज्ञस्य तच्छिद्रं निराशाः पितरो गताः ॥

यो यजमान इत्यर्थः ।

यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत् ।
गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्मणि ॥

शङ्खोऽपि—

उपवीतं कटौ कृत्वा कुर्याद्गात्राऽनुलेपनम् ।
एकवासाश्च योऽश्नीयात् निराशाः पितरो गताः ॥

अथ पुष्पाण्युच्यन्ते ।

ब्रह्माण्डपुराणे—

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥ इति ।

सुमनसः पुष्पाणि । सङ्ग्रहे—

तुलसी श्राद्धकाले तु दत्ता शिरसि धारिता ।
दाता भोक्ता पिता तस्य विष्णुलोके महीयते ॥

प्रयोगपारिजाते—

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥

सायणीये—

तुलसीशतपत्रं च भृङ्गराजं तथैव च ।
मरुकं मल्लिकाश्चैव पितॄणां दत्तमक्षयम् ॥

मार्कण्डेयः—

पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः।
प्रीणिताः पितरस्तेन यावच्चन्द्रार्कमेदिनी॥

यत्तु कैश्चिदस्याः श्राद्धे वर्जनीयत्वमुक्तं तत् स्मृतीतिहासपुराणेष्वदृष्टत्वादमूलम्।

श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका।
तगरं मारुतं चैव पितॄणां दत्तमक्षयम्॥

ग्रन्थान्तरे जातीनिषेधस्तु रक्तजातीविषयः।

चम्पकं शतपत्रं च भृङ्गराजं च वालका।
तुलसी मालती पद्मं पितॄणां तुष्टिकारकम्॥

वर्ज्यानि पारिजाते—

कदम्बं बिल्वपत्रं च केतकी बकुलं तथा।
बर्बरी कृष्णपुष्पाणि श्राद्धकाले न दापयेत्॥
केतकीकरवीराणां बर्बरीबिल्वपत्रयोः।
जातेर्दर्शनमात्रेण निराशाः पितरो गताः॥

शङ्खः—

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च॥
जपादिकुसुमं झिण्टी रूपिका सकुरण्टिका।
पुष्पाणि वर्जनीयानि श्राद्धकर्माणि नित्यशः॥

आदिशब्दाज्जलजव्यतिरिक्तपुष्पाणि गृह्यन्ते। रूपिकाऽर्कपुपुष्पम्। पीतकुरण्टिका झिंटीति। चैत्यवृक्षः श्मशानवृक्षः। उग्रगन्धीनि केतकादीनि। अगन्धीनि द्रोणार्कधत्तूरादीनि। धूपस्वरूपं चन्द्रिकायाम्—

धूपो गुग्गुलजो यस्तु तथा चन्दनसारजः।
अगुरुश्च सकर्पूरो रुरुष्कत्वक् तथैव च॥

रुरुष्कः सल्लकीवृक्षः ।

चन्दनागुरुणी चोभे तथा चोसीरपद्मकम्
रुरुष्कं गुग्गुलं चैव घृताक्तं युगपद्दहेत् ॥
घृतं न केवलं दद्यात् दुष्टञ्च तृणगुग्गुलम् ।
घृष्टं वदनरालं च आज्यं गुग्गुलधूपितम् ॥
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥
हस्तवाताहतं धूपं येऽपर्यन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तत्परिवर्जयेत् ॥
वस्त्रवातोत्थितं धूपं हस्तवातोत्थितं तथा ।
मुखेन धमितं दृष्ट्वा निराशाः पितरो गताः ॥

दीपस्वरूपमाह--

घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम् । इति ।

शंखः—

घृतेन दीपो दातव्यस्तथा वा औषधीरसैः ।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्ज्जयेत् ॥

अथाऽऽच्छादनं वायुपुराणे--

आच्छादनन्तु यो दद्यादहतं श्राद्धकर्मणि ।
आयुः प्रकाममैश्वर्यं रूपं च लभते फलम् ॥
कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।
श्राद्धेऽप्येतानि यो दद्यात्कामानाप्नोति पुष्कलान् ॥

अदाने प्रत्यवायः ।

मातापित्रोः क्षयश्राद्धे न दद्याद् वाससी तु यः ।
सप्तजन्मसु नग्नः स्यात् पितृवस्त्रापहारतः ॥

नग्नः पिशाचः । अथ वर्ज्यानि वस्त्राणि पारिजाते—

कौपीनं मलिनं रक्तं चित्रं खण्डं परांशुकम् ।
काषायं कारुधौतं च पूर्वधौतमधौतकम् ॥
धीमानेवं विधं वस्त्रं वर्जयेत् पितृकर्मणि ।

पादुकोपानहौ छत्रं चित्ररक्ताम्बराणि च ।
रक्तपुष्पं च मार्जारं श्राद्धभूमौ विवर्जयेत् ॥

अथ यज्ञोपवीतदानमादित्यपुराणे—

पितॄन् सत्कृत्य वासोभिर्दद्याद् यज्ञोपवीतकम् ।
यज्ञोपवीतदानेन विना श्राद्धन्तु निष्फलम् ॥
तस्माद्यज्ञोपवीतस्य दानमावश्यकं स्मृतम् ।
यज्ञोपवीतं दातव्यं वस्त्राऽभावेऽपि जानता ॥
पितॄणां वस्त्रदानस्य फलं तेनाऽश्नुतेऽखिलम् ।

अथ भोजनपात्राणि—

भोजने हैमरूप्याणि दैवे पित्र्ये यथाक्रमम् ।

तेषामभावे विष्णुः—"तैजसानि पात्राणि दद्यात्" इति । तैजसानि कांस्यताम्रादीनि । तेषामभावे स एव—

पलसेभ्यो विना न स्युः पर्णपात्राणि भोजने ।

पर्णपात्राणि पर्णनिर्मितानि ।

सौवर्णानीह पात्राणि मृन्मयानि नतु क्वचित् ।
नायसान्यपि कुर्वीत पैत्तलानि न चैव हि ॥
न च सीसमयानीह शस्यन्ते(१) त्रपुजान्यपि ।

---

(१) 'त्रपु सीसकरङ्गयोः इति कोशः ।

बोपेदवस्तु स्मृतिसंग्रहमुदाजहार—

श्राद्धेपलाशपत्राणि मधूकोदुम्बराणि च ।
पारिकाकुटकप्लक्षककचानि क्रमाज्जगुः ॥
कदलीचूतपनसजम्बुपुन्नागचम्पकाः ।
अलाभे मुख्य पात्राणां ग्राह्याः स्युः पितृकर्मणि ॥ इति ।

तत्र कदलीपत्रं नैव ग्राह्यम् 'न जातिकुसुमानि' इति वचनादिति चन्द्रिकायाम् ।

असुराणां कुले जाता रम्भा पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ।

इति क्रतुवचनाच्चेति तत्रैव ।

वृद्धशातातपः—

पात्रे तु मृन्मये यस्तु श्राद्धे भोजयते पितॄन् ।
स याति नरकं घोरं भोक्ता च सपुरोहितः ॥

अथ परिवेशनविधिरभिधीयते ।

हस्तदत्तास्तु ये स्नेहाल्लवणव्यञ्जनादयः ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम् ॥

सङ्ग्रहेऽपि—

हस्तदत्तं च नाश्नीयात् लवणव्यञ्जनादिकम् ।
अपक्कं तैलपक्कञ्च हस्तेनैव प्रदीयते ॥
न दद्यात्तु हस्तेन प्रत्यक्षलवणं तथा ।
नचायसेन पात्रेण नचैवाऽश्रद्धया पुनः ॥
नाऽपवित्रेण हस्तेन हस्तेन नविनाऽसिना ।
नायसे नायसेनैव श्राद्धेषु परिवेषयेत् ॥

अपवित्रेण दुर्लेपसंसर्गादपूतेन । न विनासिना सुवर्णरजतकुशादिहीनहस्तेन । आयसेन दर्व्यादिना आयसे अयोमयपात्रे च । नैव परिवेषयेदिति ।

वृद्धशातातपवसिष्ठलघुहारीताः—

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥

सङ्ग्रहे तु—

काष्ठेनायसदर्व्याऽन्नं यद्दत्तं श्राद्धकर्मणि ।
हस्तेनाऽपिच यद्दत्तं तद्वै रक्षांसि भुञ्जते ॥

काष्ठदर्वीनिषेधस्तु उदुम्बरपात्रव्यतिरिक्तविषयः । तस्य साधनत्वेनोक्तत्वात् ।

तथा चाचार्यः—

उदुम्बरमयाः शस्ता दर्व्याद्याः श्राद्धकर्मणि ।
दर्व्यैव सर्वं दातव्यं न हस्ताद्यैस्तु किञ्चन ॥

दर्व्या देयं श्रितश्चाऽन्नं समस्तव्यञ्जनादिकम् ।
अपक्कं स्नेहपक्कञ्च न च दर्व्या कथञ्चन ॥
हस्तदेयानि दर्व्या च दर्व्या देयानि हस्ततः ।
एवं यो ब्राह्मणोऽश्नीयात् सोऽश्नीयान्मूत्ररेतसी ॥
अपेक्षितं द्विजो मोहाद् भुञ्जानो यो न याचते ।
अपेक्षितं न यो दद्यात्तावुभौ पितृघातकौ ॥
याचनं प्रतिषेधो वा कर्तव्यं हस्तसंज्ञया ।
न वदेन्न च हुङ्कुर्यादतृप्तौ विरमेन्न च ॥
यावदूष्मा भवेदन्ने यावत्पात्रं न मुञ्चति ।
अश्नन्ति पितरस्तत्र यावन्नोक्ता हविर्गुणाः ॥
पिबतः पतितं तोयं यदा भोजनभाजने ।
अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत् ॥

मण्डलद्रव्याण्युच्यन्ते ब्रह्मपुराणे—

मण्डलानि तु कार्याणि नीवारैश्चणकैः शुभैः ।
गौरमृत्तिकया वाष्पप्रणीतेनाऽथभस्मना ॥

प्रणीतेन मण्डलार्थं शुभवर्णतया निर्मितेन । मण्डलकरणस्यावश्यकत्वमुक्तं सङ्ग्रहे—

ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च ।
मण्डलानुपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥
यातुधानाः पिशाचाश्च क्रूराश्चैव तु राक्षसाः ।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ॥

तत्प्रकारः सङ्ग्रहे—

नैर्ऋतीं दिशमारभ्य नैर्ऋत्यन्तं समापयेत् ।
तामेव दिशमारभ्य ईशान्यन्तं समापयेत् ॥
ईशानीं दिशमारभ्य नैर्ऋत्यन्तं समापयेत् ।
तामेव दिशमारभ्य पैतृकस्य तदन्तिके ॥

अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

अथाऽग्नौकरणम् । मार्कण्डेयः—

आहिताग्निस्तु जुहुयाद्दक्षिणाऽग्नौ समाहितः ।
अनाहिताग्निस्त्वौपसदे अग्न्यभावे द्विजेऽप्सु वा ॥

तथा श्राद्धचिन्तामणौ मत्स्यपुराणे—

अभावेषु च विप्रस्य पाणौ वाऽथ जलेऽपि वा ।
अजाकर्णे स्वकर्णे वा गोष्ठे वाऽथ शिवान्तिके ॥

एते जलादिपक्षा दर्भबटुनिधानपक्षे यथा सम्भवं द्रष्टव्या इति । अन्ये तु जल इति जलसमीपे श्राद्धकरणपक्षे,

विष्णुधर्मोत्तरे चाप्सु मार्कण्डेयेऽनलः स्मृतः ।
स यदाऽपां समीपे स्यात् श्राद्धे ज्ञेयो विधिस्त्वयम् ॥

इति कात्यायनस्मृतेरित्याहुः । काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः ।

यदाह गृह्यकारः—

अन्वष्टक्यश्च पूर्वेद्युर्मासिमास्यथ पार्वणम् ।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥
पित्रिये यस्तु मूर्द्धन्यस्तस्य पाणावनग्निकः ।

यमः—

अग्नौकरणशेषन्तु पित्र्ये तु प्रतिपादयेत् ।
प्रतिपाद्य पितॄणान्तु दद्याद्वै वैश्वदेविकम् ॥
अग्नौकरणशेषञ्च पिण्डार्थमवशेषयेत् ।

परिशिष्टे—

अग्नौकरणहोमश्च कर्तव्यमुपवीतिना ॥
प्राङ्मुखेनैव देवेभ्यो जुहोतीतिश्रुतिश्रुतेः ।

अपसव्येन वा कार्यो दक्षिणाभिमुखेन वा ॥

इति सव्याऽपसव्यविकल्पोऽग्निपाणिहोमभेदेन वा शाखाभेदेन वा ।

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेनतृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकाल्पितम् ।
एकीभावेन भोक्तव्यं पृथक्भावो न विद्यते ॥
उदीच्याः प्राहुरत्रैवं न प्राश्नीयात्करे हुतम् ।
निधाय तद्धुतं पात्रे आचम्योपाविशेदिति ॥

पात्रालम्भनप्रकार उक्तश्चतुर्विंशतिमते—

उत्तानं दक्षिणं, सव्यं न्यञ्चं पात्राण्युपस्पृशेत् ।
स्वस्तिकेन पितॄन् देवान् धरत्वोर्ध्वं च दापयेत् ॥

अङ्गुष्ठनिवेशनविशेषः सायणीये—

परिवर्त्य नचाङ्गुष्ठं द्विजस्यान्ने निवेशयेत् ।
राक्षसं तद्भवेदेव पितॄणां नोपतिष्ठते ॥

अन्यच्च—

उत्तानेन तु हस्तेन द्विजाङ्गुष्ठनिवेशनम् ।
यः करोति द्विजो मोहात्तद्वै रक्षांसि भुञ्जते ॥
सम्बन्धनामगोत्राणि इदमन्नं ततः स्वधा ।
पितृक्रमात्प्रदीयन्ते स्वसत्तां विनिवर्त्तयेत् ॥

धर्मप्रदीपेऽपि—

ततोऽन्नं पितृदेवेभ्यः सङ्कल्पयञ्च यथाविधि ।
यद्दत्तं दास्यमानं च आतृप्तेर्न ममेति च ॥

एतच्च सङ्कल्पोदकदानं हस्ते न देयम् । तथाच धर्मप्रदीपे—

सिद्धान्नस्य तु सङ्कल्पो भूमावेव प्रदीयते ।
हस्तेषु दीयमानं यत्पितॄणां नोपातिष्ठते ॥
भूमिर्जनित्री सर्वेषां भूतानाञ्च विशेषतः ।
तत्रोपतिष्ठतेऽन्नन्तु न च हस्ते कदाचन ॥

वैश्वदेवस्य वामेतु पितृपात्रस्य दक्षिणे ।
सङ्कल्पोदकदानं स्यान्नित्यश्राद्धे यथा हविः ॥

अकृतेसङ्कल्पेऽन्नं द्विजा न स्पृशेयुः, पात्रञ्च नोद्धरेयुः । तथा-चाऽत्रिः—

असङ्कल्पितमन्नाद्यं पाणिभ्यां यदुपस्पृशेत् ।
अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते ॥
अकृते ह्यन्नसङ्कल्पे यः पात्रञ्चोद्धरेद् द्विजः ।
वृथा श्राद्धमवाप्नोति दाता च नरकं व्रजेत् ॥ इति ।

सङ्कल्पानन्तरमपीत्वाऽपोशानमन्नं न गृह्णीयात् । तथाच तत्रैव—

अन्नं दत्तं न गृह्णीयात् यावत्तोयं न सम्पिबेत् ।
अपीत्वा मर्दितं चाऽन्नं भुञ्जते किल राक्षसाः ॥

तथा—

हस्तेनाऽन्नं न गृह्णीयाद्यावत्तोयं न सम्पिबेत् ।
अपीत्वा मर्दयेदन्नं निराशाः पितरो गताः ॥

घृतपात्रासादने विशेषो ग्रन्थान्तरे—

ओदने परमान्ने च पात्रमासाद्य मूढधीः ।
घृतेन पूरयेत्पात्रं तद् घृतं रुधिरं भवेत् ॥

श्राद्धे नियुक्तान् भोक्तॄन् हविर्गुणान्न पृच्छेदित्याह शङ्खः—

श्राद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लक्षणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नाऽत्र संशयः ॥

अपोशाने विशेष उक्तः स्मृतिसारसमुच्चये—

अपोशानं वामभागे सुरापानसमं भवेत् ।
दक्षिणभागे तु यः कुर्यात् सोमपानसमं भवेत् ॥
अपोशानं करे कृत्वा कृत्वा तु पतितोदकम् ।
पूरणन्तु पुनः कृत्वा सुरापानसमं भवेत् ॥ इति ।

नित्या भोजनाश्रितानियमाः पर्युक्षणादयः प्राणाहुत्यन्ता भोक्तॄणामत्राऽपि सन्तीति गम्यते ।

कस्यचिद्भोजननियमस्याऽनुष्ठाने दोषमाह—

भरद्वाजः—

पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति।
स्वीयेन ब्राह्मणस्वेन हस्तेन स्तेयकृद्भवेत्॥ इति

पितॄणामित्यत्र पितृशब्दो देवानामपि प्रदर्शनाऽर्थः तुल्यन्यायत्वात्। अत एव सामान्येनोक्तमत्रिणा—

दत्ते वाप्यथवाऽदत्ते भूमौ यो निर्वपेद्बलिम्।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः॥

तत्र ब्राह्मणानां भोजनकाले अन्योऽन्यस्पर्शने कर्तव्यमाह—

शङ्खः—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत्॥ इति।

अन्योच्छिष्टस्पर्शने कर्तव्यमाह स एव—

उच्छिष्टलेपसंस्पर्शे प्रक्षाल्याऽन्येन वारिणा।
भोजनान्ते नरः स्नात्वा गायत्रीत्रिशतञ्जपेत्॥

भोजनकाले भोजनपात्राणामन्योन्यस्पर्शे कर्तव्यमाह व्यासः—

उच्छिष्टोच्छिष्टसंस्पर्शस्पृष्टपात्रं विहृत्य च।
सर्वान्नं पूर्ववत्क्षिप्त्वा भोजयेत्तु द्विजोत्तमम्॥ इति।

अन्योऽपि विशेषो भरद्वाजेनोक्तः—

श्वचाण्डालादिभिर्दृष्टः श्राद्धे भुञ्जन् द्विजोत्तमः।
तदन्नमत्यजन् भुक्त्वा स्नात्वा देवीसहस्रकम्॥

जपेदिति शेषः। भोजनकाले गुदस्रावे विशेषः पारिजाते—

भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम्।
पादकृच्छ्रं ततः कृत्वाऽन्यं विप्रं नियोजयेत्॥

श्राद्धोच्चये—

हुँकारेणाऽपि यो ब्रूयात् हस्ताद्वाऽपि गुणान् वदेत्।
भूतलाच्चोद्धरेत्पात्रं भुञ्जेद् हस्तेन चाऽपि तत्॥

प्रौढपादो बहिःकच्छो बहिर्जानुकरोऽथवा ।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीताऽवशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धं पुनः खादेदपूपान्मोदकानि वा ॥
मुखेन वा धमेदग्निं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमन्नं द्विजः श्राद्धे भुक्त्वा गच्छत्यधोगतिम् ॥
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पदा न शिरो बस्ति न पदा भाजनं स्पृशेत् ॥
नान्नपानादिकं श्राद्धेष्वारयेन्मुखतः क्वचित् ।
अनिष्टत्वात् बहुत्वाद्वा न वदेद्धस्तसंज्ञया ॥

अत्र वमनात् श्राद्धविघ्ने निर्णयउक्तो ऋग्विधाने—

इन्द्राय सामसूक्तेन श्राद्धविघ्नो यदा भवेत् ।
अग्न्यादिभिर्भोजनेन श्राद्धं सम्पूर्णमेव हि ॥ इति ।

अत्राऽग्निशब्देन विधिवल्लौकिकाऽग्निप्रतिष्ठापनम् । आदि शब्देन अन्वाधानाद्याऽज्यभागान्तं स्थालीपाकतन्त्रं पितृनामगोत्र-पूर्वकाग्न्यर्चनान्नत्यागहोमादयो गृह्यन्ते । भोजनशब्देन श्राद्धस्य पुनःकरणम् । एवमग्न्यादिभिर्भोजनेनेति विधानद्वयमुक्तम् । तत्र भोजनानन्तरे श्राद्धे प्रधानभूतपिण्डदाने कृते पश्चाद्वमनादिविघ्न-प्राप्तौ होम एव कार्यः । पिण्डदानात्प्राग्विघ्नप्राप्तौ तद्दिने उपवासं कृत्वा परेऽहनि श्राद्धं कर्तव्यमित्यर्थः । उभयत्र सूक्तजपश्चाऽनुवर्तते । पृथक् निमित्तत्वादर्शनात् । तत्र प्रथमे पक्षे स्मृतिसङ्ग्रहकारः—(१)

प्राधान्यं पिण्डदानस्य भोजनस्य तदङ्गता ।

---

(१) धर्मप्रदीपे तु विशेषोक्तः ।
यजुषां पिण्डदानं स्याद् बह्वृचां द्विजतर्पणम् ।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम् ॥

अतो भुक्तिक्रियाहीनौ श्राद्धावृत्तिं न मन्यते ॥ इति ।

अत्र "श्राद्धावृत्तिं न मन्यते" इत्यनेन होमविधिः सूचितः ।

तथाचोक्तं तत्रैव—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो वमते यदि ।
लौकिकाऽग्निं प्रतिष्ठाप्य अर्चयेत्तु हुताशनम् ॥

भुञ्जान इति भुक्तवानित्यर्थः । इतरथा भोजनमध्ये पिण्डदानाभावात् ।

अन्यच्च—

एक एव यदा विप्रो भोजने छर्दितो यदि ।
तदैवाऽग्निं समाधाय होमं कुर्याद्यथाविधि ॥

एकः पितृस्थानोपवेशितः । तथाचोत्तरत्रवक्ष्यमाणत्वात् ।

प्राणादिपञ्चभिर्मन्त्रैर्यावद्द्वात्रिंशसंख्यया ।
होमशेषं समाप्याऽथ श्राद्धशेषं समापयेत् ॥ इति ।

अत्र च शब्देन(१) स्थालीपाकविधिर्दर्शितः। अथ द्वितीयपक्षमधिकृत्योक्तम्

ऋग्विधाने—

भोजनोपक्रमात्पूर्वं प्रक्रमात्परतो यदि ।
श्राद्धविघ्ने पुनः कार्यं, जपहोमौ न तृप्तिदौ ॥ इति ।

सङ्ग्रहेऽपि—

अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् ।
पुनःपाकं तु कर्तव्यं पिण्डदानं यथाविधि ॥

अत्र पुनःपाकविधानेन श्राद्धस्य पुनरावृत्तिर्विधीयते ।

तथाचोक्तं तत्रैव—

अकृते पिण्डदाने तु पिता यदि वमेत्तदा ।
पुनः पाकं प्रकुर्वीत श्राद्धङ्कुर्याद्यथाविधि ॥

---

(१) होमशेषशब्देनेत्यर्थः ।

अन्यत्तु—

पित्रर्थानां त्रयाणां हि पिता च वमते यदि ।
तद्दिने चोपवासश्च पुनः श्राद्धं परेऽहनि ॥ इति ।

अन्यच्च—

वमने वा विरेके वा तद्दिनं परिवर्जयेत् ।

सङ्कल्पश्राद्धेऽपि पुनःकरणमुच्यते—

भुक्तिक्रियायाः प्राधान्यं श्राद्धे सङ्कल्प संज्ञके ।
तत्रैव पितृविप्राणां तूपघाते पुनः क्रिया ॥ इति ।

एतद्वचनजातेन श्राद्धविघ्ने परेऽहनि अन्नेनैव पुनः श्राद्धकरणमुक्तम् । तदेतत्सांवत्सरिकप्रातिमासिकाविषयम् । अमावास्यादिश्राद्धकालेषु पित्रर्थब्राह्मणेषु येनकेनचिद्विघ्नसम्भवे तदैवाऽऽमश्राद्धं कार्यम् ।

तथा मरीचिः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सराहते ॥ इति ।

अनेन मासिकं चाब्दिकं श्राद्धमावश्यकं पक्वान्नेन कार्यमिति वचोभङ्ग्योक्तमितिमन्तव्यम् । इति श्राद्धविघ्ने निर्णयः ।

अथ प्रसङ्गात्सूतकादिना श्राद्धविघ्ने निर्णयः ।

तदाह विष्णुः—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ इति ।

सूतकमिति मृतकस्याप्युपलक्षणम् । व्रतादिविषये प्रारम्भविशेषश्च तेनैवोक्तः ।

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ।

यज्ञे वरणमिति । वृतानामृत्विजां यजमानस्य च तस्मिन्

कर्माणि नाशौचम् इति । एवं श्राद्धादिष्वपि दातृभोक्त्रोर्वेदितव्यम् ।

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायविरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् ।
अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ॥
अविज्ञाते न दोषःस्याच्छ्राद्धादिषु कदाचन ।
विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं क्रमात् ॥
भोजनार्द्धे तु सम्भुक्ते विप्रैर्दातुर्विपद्यते ।
यदा कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहिताः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः । इति ।

अन्तरा मृतसूतके निर्णय उच्यते । तत्रैव—

विवाहयज्ञयोर्मध्ये सूतके सति चाऽन्तरा ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥

अत्र निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि इति द्वितीयोपन्यासात्प्राक् यदा निमन्त्रणं तदा निमन्त्रणप्रभृति आकर्मसमाप्तेराशौचाभावाच्चदाहि पाकोपक्रमस्यैव प्रथमावयवभूतत्वेन श्राद्धारम्भशब्दवाच्यत्वम् । भोजनार्द्धे तु सम्भुक्ते यदि दातुः कश्चिद्विपद्यत इत्येतस्य तत्कालमृतस्य दातृसपिण्डनिबन्धनाशौचविषयत्वं वा निमन्त्रितेषु विप्रेष्वित्यादिना पूर्वोक्तेन सह विरोधपरिहारो विधेयः । 'शेषमन्नं परैर्देयम्' इत्येतत्तु भोक्तृगृहव्यतिरिक्तजन्ममरणविषयम् । 'दातॄन् भोक्तॄंश्च न स्पृशेत्' इत्यत्र 'दोषः' इतिशेषः । आहक्रतुः—पूर्वसङ्कल्पितद्रव्यं दीयमानं न दुष्यति ।

उक्तमिहाशौचदूषितेधिकारिणि मुख्यकालमतिक्रम्याऽऽशौचनिवृत्तौ श्राद्धङ्कर्तव्यम् इति । इत्याशौचादिविघ्ने निर्णयः ।

## अथ विकिरदानविधिः ।

तत्र वृद्धयाज्ञवल्क्यः—

विकिरं भुवि दातव्यमुच्छिष्टेभ्यः षडङ्गुलम् ।

अन्यच्च—

उच्छिष्टस्योत्तरे भागे पिण्डन्दद्यात् षडङ्गुलम् ॥ इति ।

अथोच्छिष्टप्रतिपत्तिः श्राद्धकाशिकायाम्—

यजमानस्य दासादीनुद्दिश्य द्विजसत्तम ।
तस्मादन्नं त्यजेद् भूमौ वामभागेषु पैतृके ॥
त्रिंशद् भृत्यसहस्राणां विप्रोच्छिष्टं पुनःक्रिया ।
विप्रः कदम्बकं कृत्वा वामभागे तु निक्षिपेत् ॥

अथ पात्रचालनम् । तत्र नारायणः—

अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथाऽऽगतम् ॥

बृहस्पतिः—

भोजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतम् ॥

तस्मात्स्वस्तिवाचनात्प्राक् पिण्डदानानन्तरं पात्रचालनमवश्यङ्कार्यमित्यभिप्रायः । पात्रचालने कर्तृविशेष उक्तो जातूकर्ण्येन—

पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्नच बालेन नासजात्या कथञ्चन ॥

अथ पिण्डदानम् । तत्र याज्ञवल्क्यः—

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवत् ॥ ( १।२४२ )

माषाश्च पिण्डे निषिद्धाः । तथाच स्मृतिसङ्ग्रहे—

माषाः श्राद्धेषु वै ग्राह्या वर्जयित्वाऽग्निपिण्डयोः ।
ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः ॥
माषाः सर्वत्र वै देयाः पिण्डाग्नौ च विवर्जयेत् । इति ।

तथा--

तिलाऽऽज्यमधुदध्यादि पिण्डद्रव्येषु योजयेत् ।

पिण्डाऽष्टाङ्गता ग्रन्थान्तरे उक्ता—

तिलमन्नञ्च पानीयं धूपं दीपं पयस्तथा ।
मधु सर्पिः खण्डयुक्तं पिण्डमष्टाङ्गमुच्यते ॥

पिण्डदेशः स्मृतिसारसुधानिधौ—

अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रपातयेत् ।
यत्रोपस्पृशतांवाऽपि प्राप्नुवन्ति न बिन्दवः ॥

अत्रिस्तु—

पितृणामासनस्थानादग्रतस्त्रिष्वरत्निषु ।
उच्छिष्टसन्निधानं तन्नोच्छिष्टासनसन्निधौ ॥

इत्याह । अनयोर्यथावकाशं विकल्पः । इदञ्च पिण्डदानं पितृयज्ञकल्पातिदेशाच्चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमुपादाय सन्निधौ कुर्यात् । तदभावे ब्राह्मणार्थं सार्ववर्णिकमन्नमादाय तिलमिश्रंदक्षिणाभिमुख उच्छिष्टसन्निधौ पिण्डपितृयज्ञकल्पेन कुर्यादिति मिताक्षरादिस्वरसः ।

अथ पिण्डप्रमाणम् । सङ्ग्रहे—

एकोद्दिष्टे सपिण्डे च कपित्थन्तु विधीयते ।
नारिकेलप्रमाणन्तु प्रत्यब्दे मासिके तथा ॥
तीर्थे दर्शे च सम्प्राप्ते कुक्कुटाऽण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपमम् ॥

अत्र विशेषमाह सङ्ग्रहकारः—

महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥ इति ।

पिण्डोपहतौ निर्णय उक्तेऽत्रिणा—

मार्जारमूषकस्पर्शे पिण्डे च द्विदलीकृते ।
पुनः पिण्डः प्रदातव्यस्तेन पाकेन तत्क्षणात् ॥

स्मृतिदर्पणे बौधायनोऽपि—

श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते ।
प्राजापत्यं चरित्वाऽथ पुनः पिण्डं समाचरेत् ॥

तथा श्राद्धचिन्तामणौ पारस्करः—

श्वशूकरशृगालाद्यैर्ग्रामकुक्कुटकैरपि ।
चाण्डालकरभैः पिण्डसंस्पर्शे तु प्रमादतः ॥
कृच्छ्रत्रयं चरेत्पिण्डमिति व्यासोऽब्रवीन्मुनिः ।

कृच्छ्रत्रयं कृत्वा पिण्डश्चरेदिति "काकाक्षिन्यायेन" सम्बन्धाच्चरेदितिपदादवगम्यते । अनयोश्च शक्ताऽशक्तविषयत्वेन व्यवस्थेत्येके । अन्येतु नवश्राद्धप्रकरणपाठात्तद्विषयतामाहुः । वस्तुतस्तु प्रकरणापेक्षया वाक्यस्य बलवत्त्वात्सर्वविषयतेति ।

## अथ पिण्डप्रतिपत्तिः ।

तत्र याज्ञवल्क्यः—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥ (१।२५७)

अथ काम्यपिण्डप्रतिपत्तिः । ब्रह्माण्डपुराणे श्राद्धकल्पे द्वादशोऽध्याये—

पिण्डमग्नौ सदा दद्याद्भोगार्थी प्रथमं नरः ।
दद्यात्प्रजार्थी पत्न्यै मध्यमं मन्त्रपूर्वकम् ॥
उत्तमं मानमन्विच्छन् गोषु नित्यं प्रयच्छति ।
आज्ञाञ्चैव यदा कीर्तिमप्सु नित्यं प्रवेशयेत् ॥
प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।
एवमेतत्समुद्दिष्टं पिण्डनिर्वपणे फलम् ॥ इति ।

अथ पिण्डदानानि षिद्धकालाः । तत्र पुलस्त्यः—

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते ॥

एकादश्यां त्रयोदश्यां मघाकृत्तिकयोरपि।
पिण्डदानं न कर्तव्यं पुत्रांश्च श्रियमिच्छता॥

स्मृतिरत्नावल्याम्—

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः।
श्राद्धङ्कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते॥ इति।

महाभारते—

संक्रान्तावुपवासेन पारणेन च भारत।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति॥ इति।
विवाहव्रतचौलेषु वर्षमर्द्धं तदर्द्धकम्।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥

स्मृतिरत्नावल्यां कात्यायनः—

वृद्धावनन्तरं चैषां यावन्मासः समाप्यते।
तावत्पिण्डं न दद्यात्तु न कुर्यात्तिलतर्पणम्॥

बौधायनोऽपि—

संस्कारेषु तथाऽन्येषु मासं मासार्द्धमेव वा॥ इति।

संस्कारेषु तथाऽन्येषु पुंसवनादिषु। स्मृतिसङ्ग्रहेऽपि—

विवाहोपनयादूर्द्ध्वं वर्षं वर्षार्द्धमेव वा।
न कुर्यात्पिण्डनिर्वापं न दद्यात्करकाणि च॥

अस्याऽपवादो दिवोदासीयेबृहस्पतिनोक्तः—

तीर्थे संवत्सरे प्रेते पितृयागे महालये।
पिण्डदानं प्रकुर्वीत युगादिभरणीमघे॥
महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि।
यस्यकस्याऽपि मर्त्यस्य सपिण्डीकरणे तथा॥
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा॥ इति।

विशेषः सङ्ग्रहे—

मातापितॄणामब्देतु विवाहादिषु सर्वदा।

तिलैः सपिण्डा दातव्याः शून्ये (१)श्राद्धे विवर्जयेत् ॥ इति ।

विवाहादिषु जातेष्वित्यर्थः । तेन योऽयं पिण्डदाननिषेधः सः अन्नमयपिण्डविषयः, सङ्कटे तिलैः पिण्डदानस्य विहितत्वात् । तथा अन्यत्राऽपि—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

कार्ष्णाजिनिः—

ऋते नैमित्तिकं काम्यं श्राद्धं यस्तु मघोडुनि ।
प्रदद्यात् ज्येष्ठपुत्रस्य नाशः स्यात् तस्य निश्चितम् ॥

नैमित्तिकं ऋते नैमित्तिकं विना काम्यश्राद्धदाने महान्दोषः । तथा—

मघा युगादौ भरण्यां श्राद्धङ्कुर्यात्प्रयत्नतः ।
पिण्डदानं न कुर्वीत यदीच्छेज्जिवतः सुतान् ॥

रामकौतुके—

नन्दाऽश्वकामरव्यारभृग्वग्निपितृकालभे ।
गजे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

नन्दाः प्रतिपच्छष्ठ्येकादश्यः । अश्वः सप्तमी । कामस्त्रयोदशी । रव्यारौ सूर्याङ्गारकौ । भृगुः शुक्रवासरः । अग्निपितृकालभानि कृत्तिकामघाभरण्यः । गजवैधृतिपाताः प्रसिद्धाः । अत्राऽयमाशयः—नन्दायुगादिमन्वादिमघाभरणीसक्रान्तिनिमित्तः क्रियमाणेषु काम्यश्राद्धेष्वयं पिण्डदाननिषेधः, न तु निमित्तान्तरप्राप्तेषु नित्येषु च निषेधः । तेन भरणीमघायुगाद्यादिभिरप्युपलक्षितायां नन्दायाश्च तिथावपरपक्षे सपिण्डकश्राद्धकर्तुः पुत्रवतोऽप्यधिकारः ।

तथाचोक्तमन्त्रिणा—

महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि ।

---

(१) 'तिलैः पिण्डाः प्रदातव्याः अन्य'इति ग पुस्तके पाठः ।

तीर्थेऽपि निर्वपेत् पिण्डान् रविवारादिकेष्वपि ॥
तिथिवारप्रयुक्तोऽयं दोषो यः समुदाहृतः ।
स श्राद्धे तन्निमित्ते स्यान्नाऽन्यश्राद्धे कदाचन ॥

सङ्ग्रहे—अमावास्यां क्षयाहे च प्रेतपक्षे तथैव च ।
श्राद्धं सपिण्डकं कुर्यात् तिथिवारं न शोधयेत् ॥

निर्णयदीपिकायाम्—
तीर्थे संवत्सरे प्रेते पितृपक्षे शशिक्षये ।
पिण्डदानं प्रकुर्वीत युगादौ भरणीमघे ॥

पितृपक्षो महालयः । युगादिः त्रयोदशी ।

तथा—दर्शश्राद्धे गयाश्राद्धे श्राद्धे चाऽपरपाक्षिके ।
पिण्डदानं प्रकुर्वीत भरण्यां नैव दुष्यति ॥ इति ।

अपरपक्षे प्रतिपदादिदर्शान्तं कृतसङ्कल्पस्य सपिण्डकश्राद्धदाने कुत्राऽपि न निषेध इत्युक्तम्—
आश्विनस्याऽसिते पक्षे श्राद्धं कुर्याद्दिने दिने ।
नैव नन्दादि वर्ज्यं स्यात् नैव वर्ज्या चतुर्दशी ॥

दशम्यादिपक्षेषु तु चतुर्दशी वर्जनीया ।

तदाह मनुः—
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥ ( ३।२७६ )

अत्राऽऽदिशब्देन पञ्चम्युपक्रमोऽष्टम्युपक्रमश्च गृह्यते । एवं
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
इति याज्ञवल्क्यवचनं पञ्चम्यादिपक्षेष्ववतिष्ठते ।

इति पिण्डदाननिषिद्धकालनिर्णयः ।

इति श्री महाराजाऽधिराजसहगिलान्वयैकभूषण-
परमानन्दादिष्ट 'धर्माधिकारि' रामपण्डितात्मज
पण्डित विनायककृतायां श्राद्धकल्पलतायां
श्राद्धीयपदार्थेतिकर्तव्यतानिरूपणस्त-
बकस्तृतीयः ॥ ३ ॥

अथ परिभाषा उच्यते । पारिजाते—

इष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्यौ वैश्वदेविकौ ।
नान्दीमुखे सत्यवसू काम्ये च धूरिलोचनौ ॥
पूरूरवाद्रवौ चेति पार्वणे समुदाहृतौ ।
नैमित्तिके कालकामावेवं सर्वत्र कीर्तयेत् ॥
वसुरुद्रस्तथाऽदित्यः पित्रादित्रितये क्रमात् ।
मातामहादि–मात्रादि- त्रितये स्मृतिमर्हति ॥
पिण्डदाने तु वरुणः प्राजापत्यश्चयस्तथा ।

स्मृत्यन्तरे तु—

सूक्तस्तोत्रजपौ त्यक्त्वा पिण्डाऽऽघ्राणं प्रदक्षिणम् ।
आव्हानात्स्वागतान्तश्च विना च परिवेषणम् ॥
विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा ।
विप्राणां दक्षिणाश्चैव स्वस्तिवाचनकं विना ॥
पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिना सदा ।
द्वेद्वे पवित्रे ऋजुनी दैवे कर्मणि योजयेत् ॥
विभज्य द्विगुणीकृत्य त्रीणि त्रीणि तु पैतृके ।
हस्तोच्छिष्टाऽपनयनमावाहनविसर्जने ॥
दाक्षिणां सौमनस्यञ्च विनाऽन्यद्देवपूर्वकम् ।
अन्वाच्य दक्षिणं जानुं प्राग्वोदग्वाऽप्रदक्षिणम् ॥
यज्ञोपवीती स्वाहेति देवे कुर्याद्यवैस्तथा ।
प्राचीनावीतिना पित्र्यं सव्यजानुनिपातिना ॥
दाक्षिणास्येन कर्तव्यमप्रदक्षिणतास्तिलैः ।
दैव्यर्चा दाक्षिणादिःस्यात्पादजान्वंसमूर्द्धसु ॥
शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके ।
पितृभ्यो निखिलं दद्यात्स्वधाकारेण सर्वदा ॥
अक्षय्यमासनञ्चैव वर्जयित्वाऽर्घ्यमेव च । इति ।

नाऽप्रोक्षितं स्पृशेत्किञ्चिन्न वदेन्मानुषीं गिरम् ।
नचोद्वीक्षेत भुञ्जानं नचैवाऽश्रूणि पातयेत् ॥
त्यजेत् क्रोधं प्रमादञ्च न श्राद्धे त्वरितो भवेत् ।
यदि वाग्यमलोपः स्याज्जपहोमाऽर्चनादिषु ॥
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ।
स्वागते स्वस्तिवचने गोत्राशीःषु प्रदक्षिणे ॥
अर्घ्ये च दक्षिणादाने सव्यं षट्सु विधीयते ।
अक्षय्यासनयोः षष्ठी द्वितीयाऽऽवाहने तथा ॥
अन्नदाने चतुर्थी स्यात् शेषाः सम्बुद्धयः स्मृताः ।
आसनाऽऽवाहने पाद्ये अन्नदाने तथैव च ॥
अक्षये पिण्डदाने च षट्सु नामानि कीर्तयेत्(१) ।

पृथ्वीचन्द्रोदये शङ्खः—

आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः ।
पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि ॥
अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत् ।

तत्रैव परिशिष्टे—

क्षणे च पिण्डदाने च गन्धे धूपाक्षये तथा ।
सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ॥
अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम च कीर्तयेत् ।

कालिकायां सङ्ग्रहे मत्स्यः—

सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च ।
पश्चाद्रूपं विजानीयात् क्रम एष सनातनः ॥

तत्रैव—

सकारेण तु वक्तव्यं गोत्रं सर्वत्र धीमता ।
सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥

---

(१) एतावान्ग्रन्थः क ग पुस्तकेनास्ति ।

यथा काश्यपसगोत्रेति,

परशरसगोत्रस्य वृद्धस्य तु महात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमधार्मिकः ॥

इति मोक्षधर्मप्रयोगाच्च । तेन गोत्रसगोत्रयोः पर्यायत्वाच्छाखाभेदाद्व्यवस्थेतिशूलपाणिः ।

गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।
यस्मादाह श्रुतिः सर्वाः प्रजाः काश्यपसम्भवाः ॥
पृथिवीसत्पिता वाय्वस्तत्पिता चान्तरिक्षसत् ।
अभिधानाऽपरिज्ञाने दिविषत्प्रपितामहः ॥
श्राद्धारम्भेऽवसाने च पादशौचे तथाऽर्चने ।
विकिरे पिण्डदाने च षट्सु चाऽऽचमनं स्मृतम् ॥
श्राद्धारम्भे च ये दर्भाः पादशौचे विसर्जयेत् ।
अर्चनादौ तु ये दर्भा पिण्डोत्थाने विसर्जयेत् ॥
उत्थानान्ते तु ये दर्भा दक्षिणान्ते विसर्जयेत् ।
प्रार्थनादौ तु ये दर्भा नमस्कारे विसर्जयेत् ॥

स्मृतिरत्नावल्यामपि—

विकिरे पिण्डदाने च तर्पणे स्नानकर्मणि ।
आचान्तश्च प्रकुर्वीत दर्भसन्त्यजनं बुधः ॥ इति ।

सङ्ग्रहेऽपि—

न स्मरेदृषिदैवञ्च श्राद्धे वैतानिके मखे ।
ब्रह्मयज्ञे च वै तद्वत् तथोङ्कारञ्च नोच्चरेत् ॥

वृद्धवसिष्ठोऽपि—

सर्वत्रोङ्कारमुच्चार्य श्राद्धमन्त्रेषु नोच्चरेत् ।
आर्षच्छन्दांसि नै तद्वत् यज्ञतर्पणकर्मणि ॥

इति श्राद्धपरिभाषा ।

## अथ नियताऽनियतनिमित्तश्राद्धनिर्णयः ।

तत्र नियताऽनियतनिमित्तयोः श्राद्धयोः सन्निपातेऽनियत निमित्तस्याऽनुष्ठानादेव नियतनिमित्तमपि सिध्यतीत्यनियतनिमित्तमेव कुर्यात् ।

तदुक्तं कालादर्शे—

नित्यदार्शिकयोः सोदकुम्भमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥
दार्शिकस्य च मन्वादेः सम्पाते श्राद्धकर्मणः ।
प्रसङ्गादितरस्याऽपि सिद्धेरुत्तरमाचरेत् ॥
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । इत्यादि ।

नित्यम् अमावास्याश्राद्धं दार्शिकम्, तयोः सन्निपाते एकदिने प्रसक्तौ उत्तरमाचरेत् । मरणदिनादारभ्य संवत्सरपूर्तिपर्यन्तं प्रतिमासं मृताहे विहितं मासिकम् । संवत्सरादर्वाक् सपिण्डीकरणे संवत्सरपूर्तिपर्यन्तं प्रतिदिवसं विहितं सोदकुम्भश्राद्धं कुर्यात् । माघामावास्या युगादिः । अतः सन्निपातः । अलभ्ययोगशब्देन चन्द्रसूर्यग्रहणसंक्रान्त्यर्द्धोदयादीनामुपसङ्ग्रहः । अलभ्ययोगानिमित्ताऽमावास्याश्राद्धसम्पाते अलभ्ययोगनिमित्तं श्राद्धं कुर्यात् । ग्रहणार्द्धोदययोरमावास्याकालीनत्वात्सम्पातः । दार्शिकस्य मन्वादेश्च सम्पाते मन्वादिश्राद्धं कुर्यात् । फाल्गुनामावास्या मन्वादिः । अतः संनिपातः । ननूत्तरशास्त्रार्थानुष्ठाने पूर्वशास्त्रस्य बाध इत्यत्राऽह-प्रसङ्गादिति । उत्तरशास्त्रार्थभूतश्राद्धाऽनुष्ठानेन पूर्वशास्त्रार्थभूतश्राद्धस्याऽपि सिद्धिर्भवति । यथा काम्यशास्त्रार्थाऽनुष्ठाने नित्यशास्त्रार्थानुष्ठानसिद्धिरिति न बाधः । अत्र पूर्वं नियतनिमित्तम् उत्तरमनियतनिमित्तम् । अतः उत्तरमेवाऽनुष्ठेयम् । तस्याऽपवादमाह—

नित्यस्य वोदकुम्भस्य नित्यमासिकयोरपि ।
दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ॥
नित्यस्य चाब्दिकस्याऽपि दार्शमासिकयोरपि ।
युगाद्याब्दिकयोश्चाऽपि मन्वाद्याब्दिकयोरपि ॥
मत्याब्दिकस्य चाऽलभ्ययोगेषु विहितस्य च ।
सम्पाते देवताभेदात् श्राद्धयुग्मं समाचरेत् ॥

अत्र नियतनिमित्ताऽनियतनिमित्तश्राद्धसम्पाते देवताभेदान्न-प्रसङ्ग इति श्राद्धयुग्ममनुष्ठेयमेव । ननु जीवद्भार्यस्य दार्शमासिकसम्पाते सपत्नीकत्वाभावेन देवताभेदाभावान्मासिकमेवाऽनुष्ठेयम् । उत्तरं, मासिकस्यैकोद्दिष्टत्वे भवत्येवम् । पार्वणत्वे तु पितृपितामह-योरन्यतरस्य च मृतभार्यत्वेन सपत्नीकत्वाद्देवताभेदोऽस्त्येवेति मासिकं दार्शिकञ्चानुष्ठेयम् । एवं दार्शिकोदकुम्भसंपाते दार्शिकाब्दिकसम्पातेऽपि विज्ञेयम् । ननु द्वन्द्वानामनुष्ठेयत्वे किम्पूर्वमनुष्ठेयमित्यत्राह—

निमित्तानियतिश्चाऽत्र पूर्वाऽनुष्ठानकारणम् ।

एषु द्वन्द्वेषु यस्य श्राद्धस्य निमित्तमनियतं तच्छ्राद्धं पूर्वमनुष्ठेयम् । अनियतनिमित्तस्य बलवत्त्वात् । तेन मासिकोदकुम्भादि-पूर्वं कृत्वा पश्चान्नित्यश्राद्धादि कुर्यात् । अत्रैव विशेषमाह—

पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि ।

नित्योदकुम्भादिसर्वश्राद्धकर्मणि मातापितृसम्बन्धिनि युगपदुपस्थिते पितुः पूर्वं कृत्वा पश्चान्मातुः कुर्यात् । सर्वत्र दाहादौ सापिण्डीकरणान्ते सर्वश्चैतदुत्तरकालभाविनि मत्याब्दिकादौ श्राद्धकर्मणि ।

तदाह काष्र्णाजिनिः—

पित्रोः श्राद्धे समम्प्राप्ते नवे पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्यादन्यत्रासन्नियोगतः ॥ इति ।

पर्युषिते चिरन्तने। अन्यत्र मातृपितृव्यतिरिक्तश्राद्धे। ननु
नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् ॥
इति प्रचेतसा एकस्यैकस्मिन्दिने श्राद्धद्वयकरणं निषिद्धम्, तत्कथमुच्यते सम्बन्धक्रमेणैको बहूनि श्राद्धानि कुर्यादिति ? सत्यं. देवताभेदे निमित्तभेदे चैकस्याऽनेकश्राद्धविधानात्।

तदुक्तं जाबालिना—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धन्न तद्दिने।
नैमित्तिकन्तु कर्तव्यं निमित्ताऽनुक्रमोदयम् ॥ इति।

तथा—

श्राद्धं कृत्वा पुनः श्राद्धं न कुर्यादेकवासरे।
यदि नैमित्तिकं न स्यादेकोद्दिष्टं भवेद्यदि ॥ इति।

कात्यायनोऽपि—

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ॥

अत्रैव विशेषमाह—

पार्वणैकोद्दिष्टयोश्च पार्वणं पूर्वमाचरेत्।

पितृभ्रात्रोरन्येषां वा मध्ये द्वयसम्बन्धिनोः पार्वणैकोद्दिष्टयोः पार्वणं पूर्वमाचरेत्।

तदाह जाबालिः—

यद्येकत्र भवेतान्वेदेकोद्दिष्टञ्च पार्वणम्।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥

अत्रैव विशेषमाह—

दैवतैक्ये तु काम्याऽनुष्ठाने नित्यञ्च सिध्यति।

यत्र दैवतैक्यं तत्र काम्यानुष्ठानान्नित्यञ्च श्राद्धं प्रसङ्गात् सिध्यति।

तदुक्तं स्मृतिसङ्ग्रहे—

काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति।

स्यादेकत्वञ्च देशादेर्दैवतैक्यं भवेद्यदि ॥ इति ।

द्विबहूनि श्राद्धानि कुतपाद्युक्तकाले पृथग्विधातुम शक्यत्वे सति तन्त्रेण कुर्यात् । तन्त्रविशेष उक्तो गरुडपुराणे—

एकेनैव तु पाकेन श्राद्धानि कुरुते बहु ।
विकिरन्त्वेकतः कुर्यात्पिण्डान् दद्यात्पृथक् पृथक् ॥

एतदेकपाकविधानं समानधर्मश्राद्धविषयम् । मासिकप्रत्याब्दिकादिभिन्नधर्मेषु पृथगिति ।

अथ महालयविधिरभिधीयते—अग्निपुराणे व्रतपरिभाषाऽध्याये—

आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
कुर्याच्छ्राद्धं तत्र रविः कन्यां गच्छतु वा नवा ॥ इति ।

अन्यत्राऽपि—

नभस्यस्याऽपरः पक्षः शुक्लप्रतिपदा सह ।
महालय इति प्रोक्तो गजच्छायाह्वयस्तथा ॥

नभस्याऽपरः भाद्रपदस्याऽपरः । पक्षः कृष्णपक्षः । शुक्लप्रतिपदा आश्वयुजशुक्लप्रतिपदा सह महालयः इति प्रोक्तः । तथा गजच्छायाह्वयः प्रोक्तः ।

तदाह वृहन्मनुः—

नभस्यस्याऽपरः पक्षो यत्र कन्यां व्रजेद्रविः ।
स महालयसंज्ञः स्यात् गजच्छायाह्वयस्तथा ॥ इति ।

तथाच श्लोकगौतमः—

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि सम्पूर्णवरदक्षिणैः ॥ इति ।

देवलश्च—

अहः षोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता ॥ इति ।

अत्र षोडशपदं त्रिधा व्याख्यातम्—आद्यां पूर्णमासीमादायाथवा तिथिवृद्ध्यभिप्रायेण, शुक्लप्रतिपदभिप्रायं वा ।

अत्र कर्तव्यमाह स एव—

वर्गद्वयं समुद्दिश्य श्राद्धमाद्यं सदैवकम् ।
कुर्यात्पार्वणमार्गेण नोचेद्दोषो महान् भवेत् ॥

तत्र वर्गद्वयं पितृवर्गं मातामहवर्गञ्च समुद्दिश्य श्राद्धं कुर्यात् । नत्वेकमेव पितृवर्गम् । पितृपितामहप्रपितामहाः पितृवर्गः, मातामहमातुःपितामहमातुःप्रपितामहा मातामहवर्गः ।

तदाह गौतमः—

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥ इति ।

जाबालिः—

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे पक्षे(१) श्राद्धकामस्तथा परान् ॥ इति ।

नोचेत् श्राद्धाकरणे महान् दोषो भवेत् ।

तदाह गार्ग्यः—

सूर्ये कन्यागते श्राद्धं यो न कुर्याद्गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीडया ॥ इति ।

कार्ष्णाजिनिरपि —

वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम् ॥ इति ।

यदाह कार्ष्णाजिनिः—

हस्तर्क्षस्थे दिनकरे प्रेतराजाऽनुशासनात् ।
तावत्प्रेतपुरी शून्या यावद् वृश्चिकदर्शनम् ॥ इति

दिनकरस्य हस्तर्क्षस्थता चोत्तरफाल्गुनीद्वितीयपादे कन्यागतस्यैव भवतीति न स्वार्थपरमित्यर्थः ।

---

(१) 'दत्त्वा' इत्यपि पाठः ।

अत्रैव विशेषमाह—

पक्षाद्यादि च दर्शान्तं पञ्चम्यादि दिगादि वा।
अष्टम्यादि यथाशक्ति कुर्यादापरपक्षिकम्॥

पक्षादिः प्रतिपत् तदादि दर्शान्तम् अमावास्यापर्यन्तम् आपरपक्षिकं श्राद्धं कुर्यात्, पञ्चम्यादिदर्शपर्यन्तम्, दिग्दशमी तदादि दर्शपर्यन्तम्, अष्टम्यादि दर्शपर्यन्तामिति चत्वारः पक्षाः। यथाशक्तीत्यनेन शक्त्या व्यवस्था-प्रथमपक्षाशक्तौ द्वितीय पक्षः, तदशक्तावष्टम्यादिपक्षः, तदशक्तौ दशम्यादिपक्ष इति व्यवस्था।

तदाह गौतमः—"अथाऽपरपक्षे श्राद्धं पितृभ्यो दद्यात्, पञ्चम्यादि दर्शान्तम् अष्टम्यादि, दशम्यादि सर्वस्मिन्वा" इति।

यथा ब्रह्माण्डपुराणे—

नभस्यकृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥ इति।

त्रिभागहीनपक्षे पञ्चम्यादि, त्रिभागपक्षे दशम्यादि, अर्द्धपक्षे अष्टम्यादि। यस्तु-महालयनिमित्तकमेव श्राद्धं करोति, स पितृमृताह एकं कुर्यात्(१)।

तदुक्तं निर्णयदीपिकायां नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
मृताऽहनि पितुर्यो वै श्राद्धं दास्यति मानवः॥
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्।
तस्मात्तत्र प्रकर्तव्यं श्राद्धं श्राद्धं परैर्नरैः॥ इति।

अत्र मृताहनीतिविशेषोपादानात्तत्र नन्दाभृगुवारादिवचनान्तरोक्तनिषेधानवकाशः।

कात्यायनः—

अशक्तः पक्षमध्ये तु करोत्येकदिने यदि।

(१) 'पितामह' इति ख पुस्तके पाठः।

निषिद्धेऽपि दिने कुर्यात् पिण्डदानं यथाविधि ॥
या तिथिर्यस्य मासस्य मृताहे सम्प्रवर्तते।
सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ॥

पूर्वोदाहृतनिषेधवचनानां तन्निमित्तश्राद्धविषयत्वमिति पूर्वमुक्तमेव। एतदापरपक्षिकं प्रथमसंवत्सरे न कार्यम्।

तदुक्तम्—
दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम्।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने ॥

अस्याऽपवादः—
अस्थिक्षेपं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम्।
प्रथमेऽब्देऽपि कुर्वीत यदि स्यात् भक्तिमान् सुतः ॥ इति।

अस्मिन् महालये या भरणी सा महाभरण्युच्यते।

तदुक्तं मात्स्ये—
भरणी पितृपक्षे तु महती परिकीर्तिता।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥
महालये गयाश्राद्धे वृद्धौ चाऽन्वष्टकासु च।
नवदैवत्यमत्र स्यादन्यत् षट्पुरुषं विदुः ॥

तथा—
देवतानवकं वृद्धौ तथैवाऽन्वष्टकासु च।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे गयासु च(१) ॥

स्मृतिदर्पणे गालवः—
अनेका मातरो यस्य श्राद्धे चाऽपरपाक्षिके।
अर्घ्यदानं पृथक् कुर्यात्पिण्डमेकन्तु निर्वपेत् ॥

महालये मघ्याऽष्टम्यां श्राद्ध गयाश्राद्धतुल्यम्।

ब्रह्माण्डे—
आषाढ्याः पञ्चमे पक्षे गया मघ्याष्टमी स्मृता।

(१) "प्रोष्ठे महालये" इति पुस्तकपाठः।

त्रयोदशी गजच्छाया गयातुल्या तु पैतृके ॥

अत्र च नवम्यामन्वष्टक्यं श्राद्धं नवदैवतं स्यात् । पृथक्कुर्यादित्युक्तेर्मातुरप्यत्र पृथक् श्राद्धदानम् ।

तदुक्तम्—

अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।
पित्रादि मातृमध्यञ्च ततो मातामहान्तकम् ॥

तथा—

वृद्धौ तु मातृपूर्वन्तु श्राद्धङ्कुर्वीत बुद्धिमान् ।
अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत् ॥

अन्यच्च—

केवलास्तु क्षये कार्या वृद्धावादौ प्रकीर्तिताः ।
अन्वष्टकासु मध्यस्था नान्त्याः कार्यास्तु मातरः ॥ इति ।

पितृपूर्वमन्वष्टकाश्राद्धं न मातृपूर्वम्,

सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ॥

इति सूतवाक्यात् । पितृव्यपत्नी भ्रातृजाया स्वभगिनी पितृष्वसृमातृष्वस्रादीनामपुत्राणां नवदैवोत्तरकाले कार्यम् ।

तमिस्रपक्षे नवमी पुण्या भाद्रपदे हि या ।
चतस्रः पार्वणाः कार्याः पितृपक्षे मनीषिभिः ॥

इति निगदितं मातामहीश्राद्धं देशकुलधर्मवशेन ज्ञेयम् ।

तथा—

येनैव च पिता यातो येन यातः पितामहः ।
तमेव मार्गं यायाच्च नान्यं यायात्कदाचन ॥

इति न्यायासिद्धं कार्यम् । जीवन्मातृकेन तु सापत्नमातृमुख्यत्वमधिकृत्य मातृपार्वणं न कार्यम् । मुख्यत्वं हि जनन्या एव । तेनैव पुत्रिणीत्वेऽपि पितरि जीवति पितृव्यस्येव तस्या न मुख्यत्वम् । क्षयाहैकोद्दिष्टन्तु कार्यमेव । सकृन्महालयपक्षे तिथ्यादिविशेष उच्यते—

कालविधाने—

कन्या कुम्भगते सहस्रकिरणे तामिस्रपक्षे भृगो-
र्वारांशोदयमङ्गनातनययोर्जन्मत्रयं चात्मनः ।
हित्वानन्दकरीं चतुर्दशतिथिं श्राद्धं विदध्याद्बुधु-
स्त्वाष्ट्राद्राशिवसमारमन्त्रियमभे मित्रेन्दुविष्ण्वम्बुषु ॥ इति ।

अस्यार्थः—अत्र भृगुग्रहणमुपलक्षणम् । तेन श्राद्धकर्मणि शुभानां वारवर्गोदयाः प्रतिषिद्धाः ।

अत्रोद्देश्या उच्यन्ते—

ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरस्तत्स्त्रियः ।
ताताम्बाऽऽत्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

अस्यार्थः—त्रितयशब्दस्य ताताम्बाभ्यां प्रत्येकं सम्बन्धः । सस्त्रीति मातामहादित्रयस्य विशेषणम् । अन्ये तु मातामह्यादीनां पृथक् तर्पणमिच्छन्ति श्राद्धवत् । स्त्रीतनयादीति तर्पयित्रपेक्षया । तातजननीस्वभ्रातर इति । तातभ्रातरः पितृव्याः । मातृभ्रातरो मातुलाः । स्वभ्रातरः तर्पणकर्तृभ्रातरः । तत्स्त्रियः पितृव्यमातुलस्वभ्रातृस्त्रियः । तातेति—पितृष्वसृमातृष्वसृस्वसारोऽपत्यभर्तृयुक्ताः । ततश्च 'पितृष्वस्रे यथायोग्यं सभर्तृकायै सापत्यायै' इत्येवंप्रकारकं प्रयोगवाक्यमनुसन्धेयम् । जायापिता श्वशुरः । अन्यत् सर्वं स्पष्टम् । अत्र केषां केनविधिना कर्तव्यमित्यपेक्षायां तन्निर्णय उच्यते हेमाद्रौ—

तत्र पुराणवचनम्—

उपाध्यायगुरुस्वसृपितृव्याचार्यमातुलाः ।
श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्शिष्यपोषकाः ॥
भगिनी स्वपितृदुहिता जामातृभागिनीसुताः ।

पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा ॥
सखिद्रव्यदशिष्याद्यास्तीर्थे चैव महालये ।
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः ॥ इति ।

अत्र पितराविति पितृसमावित्यर्थः, साक्षात्पितृमातृमातामहानां त्रिपुरुषोद्देशेन कर्तव्यत्वात् ।

तथा ब्रह्माण्डपुराणे—

कन्यागते सवितरि दिनानि दशपञ्च च ।
पार्वणेनेह विधिना श्राद्धं तत्र विधीयते ॥ इति ।

अनेन वचनेन दर्शवत्सपत्नीकपितृमातामहवर्गद्वयस्य कर्तव्यत्वं प्रतिपादितम् , तथापि मातृश्राद्धं पृथक्कुर्यादिति स्मर्यते—

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।
महालये गयायाञ्च सपिण्डीकरणात्पुरा ॥
मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥ इति ।

एकोद्दिष्टविधानमुक्तं याज्ञवल्क्येन—

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ इति । (१।२५१)

तत्र पाणिहोमः कर्तव्य इत्याहाचार्यः—

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाऽष्टमम् ।
चतुर्ष्वेषु करे होमः पिण्डाश्चाऽत्र द्विजान्तिके ॥ इति ।

तत्र विशेषमाह मनुः—

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । (३।२१२)
(१)पर्युक्ष्य धर्मानास्तीर्य यतो ह्यग्निसमो द्विजः ॥ इति ।

अत्राऽऽचार्यवचनेन द्विजान्तिके पिण्डदानं कर्तव्यमित्युक्तम्, तदेकोद्दिष्टस्यैव पृथगनुष्ठानविषयम् । पार्वणश्राद्धे तन्त्राऽनुष्ठानपक्षे त्वेकत्र पिण्डदानं कर्तव्यम् । अत्रैकपाको वैश्वदेवं तन्त्रं पिण्डबर्हि-

---

(१) यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ।
अयं पाठो मनुस्मृतौ वर्तते । 'पर्युक्ष्य' इत्यादिपाठो मनौ नोपलभ्यते ।

श्चैकं स्मृत्यर्थसारेण महालयप्रकरणे उक्तत्वात्।

स्मृतिसंग्रहेऽपि—

यद्येककर्तृकं श्राद्धमनेकन्तु यदा भवेत्।
वैश्वदेवं तु तन्त्रेण पृथक् पाको न विद्यते॥ इति।

अथ संन्यासिनो महालयश्राद्धं द्वादश्यामेव कार्यमित्युक्तम्। मदनपारिजाते वायुपुराणे—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु॥

अत्र द्वादश्यामित्यत्र नियमानुपादानेऽपि कालादर्शे नियममभिप्रेत्यैवाऽभिहितम्। यथा—

श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये।
द्वादश्यामेव कुर्वीत यतेरिति विनिर्णयः॥ इति।

शस्त्रहतस्य पितुश्चतुर्दश्यामेकोद्दिष्टे कृतेऽपि दिनान्तरे पार्वणं कार्यम्। एकोद्दिष्टेन पितामहादेस्तृप्त्यसिद्धेरित्युक्तमत्र तु पार्वणेन पितामहादीनामपि तृप्तेः सिद्धत्वान्न दिनान्तरे श्राद्धङ्कर्तव्यमित्यभिप्रायः। तेन सर्वोद्देशेन द्वादश्यामेव श्राद्धङ्कर्तव्यमिति विद्याकरशम्भुकरप्रभृतयोऽपि मन्यन्त इति अलं विस्तरेण।

अथ मघात्रयोदशीश्राद्धमुच्यते। विष्णुपुराणे—

अपि नः स्वकुले जातो यो नो दद्यात् त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां मघासु च विशेषतः॥

एतच्च मघात्रयोदशीश्राद्धम् अविभक्तैरपि पृथगेव कार्यम्।

तथाच हेमाद्रौ स्मर्यते—

विभक्ता वाऽविभक्ता वा श्राद्धङ्कुर्युः पृथक् सुताः।
मघासु च ततोऽन्यत्र नाऽधिकारः पृथक् विना॥

विभक्तं विना मघाश्राद्धादन्यस्मिन् श्राद्धे पृथक् पृथगधिकारो नास्तीत्यर्थः।

यत्तु वचनम्—

कृष्णपक्षे त्रयोदश्यां यः श्राद्धङ्कुरुते नरः।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम् ॥

तत्केवलपितृवर्गश्राद्धविषयम् ।

तथाच कार्ष्णाजिनिः—

श्राद्धं नचैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तस्य पेयस्य प्रजां हिंसन्ति तत्र ते ॥

तेन वर्गद्वयस्य श्राद्धङ्कार्यमित्यभिप्रायः। अस्मिन् श्राद्धे पिण्ड-दानं न कार्यम् ।

मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति ।
कनीयांस्तु त्रयोदश्यां क्षयाहाऽभ्युदयादृते ॥

अस्य फलमाह महाभारते व्यासः—

ज्ञातीनान्तु भवेच्छ्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम् ।
नावश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे ॥

अस्य मघात्रयोदशीश्राद्धकर्तुः गृहे युवानो नरा अवश्यं निश्चितं न म्रियन्त इत्यर्थः ।

## अथ चतुर्दशीश्राद्धमुच्यते ।

तथासङ्ग्रहे—

वृक्षारोहणलोष्टाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखिदंष्ट्रिविपन्नानां तेषां शस्ता चतुर्दशी ॥
तच्छ्राद्धं दैवहीनश्चेत् पुत्रदारधनक्षयः ।
एकोद्दिष्टं दैवयुक्तमित्येवं मनुरब्रवीत् ॥
तेषां प्रत्याब्दिकं श्राद्धं स्मृत्युक्तं पार्वणम्भवेत् ।
प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः ॥
दैवयुक्तन्तु तच्छ्राद्धं पितॄणामक्षयम्भवेत् । इति ।
चतुर्दश्यान्तु तच्छ्राद्धं सपिण्डीकरणात्परम् ।

एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः ॥

कालादर्शे—

श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये।
द्वादश्यामेव कुर्वीत यतेरिति विनिर्णयः ॥

शस्त्रहतस्य पितुर्महालये चतुर्दश्यामेकोद्दिष्टश्राद्धे कृतेऽपि दिनान्तरे पार्वणश्राद्धङ्कार्यम्, एकोद्दिष्टश्राद्धेन पितामहादितृप्त्यसिद्धेः। नन्वेवं मृताहेऽप्येकोद्दिष्टश्राद्धे कृते पार्वणश्राद्धमपि पितामहादितृप्तिसिद्ध्यर्थं कर्तव्यं स्यात्? न, पितृमृताहे पितामहादेस्तर्पणीयत्वास्मरणेन तत्तृप्त्यर्थं श्राद्धस्याऽननुष्ठेयत्वात्।

महालये तु—

"काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम्।
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ॥
मध्वाज्यतिलमिश्रेण"

इति पितामहादेरपि तर्पणीयत्वस्मरणात्तत्तृप्तये दिनान्तरे पार्वणश्राद्धङ्कार्यमेव। यस्तु पितामहोऽपि शस्त्रादिना हतस्तस्य महालये पितामहश्राद्धमपि चतुर्दश्यामेकोद्दिष्टरूपं कार्यम्। तथाच स्मृत्यन्तरम्—'एकस्मिन्द्वयोर्वैकोद्दिष्टविधिः' इति। एकस्मिन्पितरि शस्त्रादिना हते द्वयोर्वा पितृपितामहयोः शस्त्रादिना हतयोश्चतुर्दश्यामेकोद्दिष्टविधानात् प्रत्येकं श्राद्धङ्कार्यमित्यर्थः। द्वयोरेकोदिष्टेन प्रत्येकं श्राद्धे कृतेऽपि प्रपितामहतृप्तिसिद्ध्यर्थं दिनान्तरे पार्वणश्राद्धङ्कार्यम्। एकस्मिन् द्वयोर्वेत्यभिधानात् त्रिषु पितृपितामहप्रपितामहेषु शस्त्रादिना हतेषु नैकोद्दिष्टविधिरिति गम्यते। तेन त्रिषु शस्त्रादिहतेषु चतुर्दश्यां पार्वणविधिरेव।

तदुक्तं निर्णयदीपिकायाम्—

पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात्।
स भूते पार्वणङ्कुर्यादाब्दिकानि पृथक् पृथक् ॥

युक्तश्चैतत्। सपिण्डीकृतानां शस्त्रादिहतानां त्रयाणामपि च-

तुर्दशीरूपविहितकालसम्भवात् । तन्निबन्धनैकोद्दिष्टविधेरनवतारात् । अनेनैवाऽभिप्रायेणाऽपरार्केणाप्युक्तम्—'तत्र चैकस्य शस्त्रहतत्वेनैकोद्दिष्टविधानं, न तु त्रयाणां तथात्वे । तत्र तु पार्वणमेव' इति । त्रयाणां न तथात्वे शस्त्रहतत्वेनैकोद्दिष्टविधानं, किन्तु पार्वणमेवेति तस्याऽर्थः । देवस्वामिना तु 'त्रिष्वपि शस्त्रहतेषु पृथगेकोद्दिष्टत्रयमेव कार्यम् आहत्यवचनाभावान्न पार्वणम्' इत्युक्तम् । यदत्र युक्तं तद्ग्राह्यम् । यत्पुनः शाकटायनेनोक्तम्—

जलाऽग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि ।
श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीम् ॥ इति ।

तत्प्रायश्चित्तार्थं विहितजलाग्न्यादिकृतमरणप्रयुक्तविषयम् । अस्मिन् शस्त्रहतश्राद्धे मघास्वपि पिण्डदानं स्यात् ।

तदुक्तम्—

प्रेतपक्षे चतुर्दश्यां मघायुक्तं दिनं यदि ।
पिण्डदानं प्रकुर्वीत यस्य शस्त्रहतः पिता ॥

पितेत्युपलक्षणम् । नच शस्त्रादिहतानां कथञ्चिच्चतुर्दश्यतिक्रमे विहितकालाऽतिक्रमाच्छ्राद्धस्याऽकरणमेवेति वाच्यम् । प्रशस्ततरकालालाभेऽपि महालये श्राद्धस्याऽनुष्ठानमावश्यकमिति प्राग्दर्शितत्वात् । ततश्च शस्त्रहतानामपि प्रशस्ततरपञ्चमपक्षचतुर्दश्यतिक्रमे पार्वणविधानेनैव दिनान्तरे कार्यम् ।

"संक्रान्तावुपरागे च पर्वोत्सवमहालये ।
निर्वपेदत्र पिण्डांस्त्रीन्" । इति प्रजापतिस्मरणात् ।

इति चतुर्दशीश्राद्धविधिः ।

## अथ तीर्थश्राद्धविधिः ॥

सदाचाररत्नाकरे हारीतः—

दिवा वा यदि वा रात्रौ भुक्ते चोपोषितेऽपि वा ।
न कालनियमस्तत्र गङ्गाम्प्राप्य सरिद्वराम् ॥

काले वाप्यथवा ऽकाले तीर्थश्राद्धं सदा नरैः ।
प्राप्तैरेव सदा कार्यं पितृतर्पणपूर्वकम् ॥
तीर्थमेव समासाद्य सद्यो रात्रावपि क्षणम् ।
स्नानञ्च तर्पणं श्राद्धं कुर्याच्चैव विधानतः ॥
पिण्डदानं ततः शस्तं पितृणाञ्चैव दुर्लभम् ।
विलम्बन्नैव कुर्वीत न च विघ्नं समाचरेत् ॥

इदञ्च श्राद्धं स्नानतर्पणाद्यनन्तरमविलम्बेनैव कर्तव्यम् । तदुक्तं देवीपुराणे—

श्राद्धं तत्र च कर्तव्यमर्घ्यावाहनवर्जितम् ।
श्वध्वाङ्क्ष(१)गृध्रकाकानां नैव दृष्टिहतं च तत् ॥
श्राद्धं तत्तैर्थिकम्प्रोक्तं पितृणां तृप्तिकारकम् ।
काले वाप्यथवा ऽकाले तीर्थे श्राद्धन्तथा नरैः ॥
प्राप्तैरेव च कर्तव्यं पितृणाञ्चैव तर्पणम् ।
पिण्डदानञ्च तच्छस्तं पितृणाञ्चाऽतिवल्लभम् ॥
विलम्बो न च कर्तव्यो न च विघ्नं समाचरेत् ॥ इति ।

प्राप्तैरेवेति । आवश्यकस्नानतर्पणाद्यनन्तरं कर्तव्यम् ।

अन्यत्राऽपि—

स्नानादिकं विधायाऽदौ तीर्थे मुण्डनमाचरेत् ।
तीर्थोपवासनियमं कृत्वा श्राद्धं समाचरेत् ॥

(२)अत्र महालये श्राद्धपक्षे हिरण्ये वाप्यनुव्रज्य तिलोदकम् इति-सुमन्तुवचनात्तीर्थे हेमश्राद्धपक्षे श्राद्धीयब्राह्मणविसर्जनानन्तरं तीर्थनिमित्तं तर्पणमाचरन्ति केचित्तु पूर्वम् । तदयुक्तम् , बहुभिर्वाक्यैस्तीर्थस्नानानन्तरमेव तद्विधानात् । तीर्थश्राद्धे निषिद्धकालवर्जनमपि नेत्याह शङ्खः—

तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत् ।

---

(१) 'कृष्णकाक इति ग. पुस्तके पाठः ।
(२) 'अत्र हेमश्राद्धपक्षे' ग. घ. पुस्तक पाठः ।

पात्रञ्च ब्राह्मणम्प्राप्य सद्यः श्राद्धं समाचरेत् ॥

तथा प्रभासखण्डे—

न वारं न च नक्षत्रं न कालस्तत्र कारणम् ।
यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥

अतश्च तीर्थश्राद्धे तिथिवारनक्षत्रादिप्रयुक्तो निषेधो न प्रवर्त्तत इत्यभिप्रायः । इदं तीर्थनिमित्तकं श्राद्धं दशमासानन्तरं तीर्थप्राप्तावावश्यकम् । अन्तरा तत्फलेच्छया कृताकृतम् ।

सङ्ग्रहे—

संम्वत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनञ्चोपवासश्च ततो यत्नेन कारयेत् ॥ ।

इति यत्नपदयुक्तवचनोक्तमुण्डनादिसमानन्यायत्वात् चकारेणोपसङ्ग्रहाद्वा श्राद्धं गृह्यते । प्रयागे तु विशेषः

सङ्ग्रहे—

प्रयागे प्रतियात्रायां योजनत्रय इष्यते ।
क्षौरं तु विधिवत्कार्यं ततः स्नायात् सिताऽसिते ॥

योजनत्रयाऽधिकदेशतो गमने प्रतियात्रां क्षौरं चकारेण श्राद्धोपवासादि कार्यमित्यर्थः । विधवा तु यदि पुत्रवती तीर्थे गता तदा नैव कुर्यात् ।

सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन ।

इतिवचनात् । अपुत्रया तु कार्यमेव । 'अपुत्रा पुत्रवत्पत्नी' इति वचनात् । अनुपनीतोऽपि तीर्थश्राद्धङ्कुर्यात् ।

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥
भार्याविरहितो वाऽपि प्रवासस्थोऽपि भक्तिमान् ।
शूद्रोऽप्यमन्त्रकं कुर्यादनेन विधिना नृप ॥

इति पाद्मे सृष्टिखण्डे तीर्थे श्राद्धादिकमुपक्रम्योक्तेः । तत्र स्त्रिया अनुपनीतेन च यथादेशाऽऽचारं ब्राह्मणद्वारा करणीयं स्वयं वाऽमन्त्रकङ्कार्यम् ।

तदुक्तं स्मृत्यर्थसारे—'अनुपनीताः स्त्रीशूद्राश्च श्राद्धमृत्विजा कारयेयुः । स्वयं वा अमन्त्रकं नामगोत्राभ्यां कुर्युः । देवेभ्यो नमः, पितृभ्यः स्वधा नमः, इति मन्त्राभ्याञ्च'इति ।

अन्योऽपि विशेषः सङ्ग्रहे—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
विकिरं तृप्तिप्रश्नञ्च तीर्थश्राद्धेषु वर्जयेत् ॥
ब्राह्मणान्न परीक्षेत तीर्थकालं प्रचिन्तयेत् ।
प्राप्ततीर्थो यदा विद्वांस्तदा श्राद्धं समाचरेत् ॥
आवाहनं न तीर्थे स्यात् नाऽर्घ्यदानं तथा भवेत् ।
आहूताः पितरस्तीर्थे कृतार्घ्याः सन्ति वै यतः ॥

तीर्थे श्राद्धे पिण्डप्रतिपत्तौ विशेषो ब्रह्मवैवर्त्ते—

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ।
दक्षिणाऽभिमुखो भूत्वा पैत्री दिक् सा प्रकीर्तिता ॥ इति ।

अथ तीर्थप्रसङ्गात् गया श्राद्धं निर्णीयते ।

तत्र यद्यपि—

भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

इति मरीचिवचनादविभक्तानां गयाश्राद्धे पृथगनधिकार· इति प्रतीयते,

तथाऽपि आग्नेये गयामहात्म्ये—

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥

इत्युपक्रम्य—

देवैस्सार्द्धं सम्प्रपूज्य देवमादिगदाधरम् ।
ऋणत्रयविनिर्मुक्तः तारयेत्सकलं कुलम् ॥

इति मध्येऽभिधाय—

विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक् सुताः ।

गयायान्तु ततोऽन्यत्र नाऽधिकारः पृथक् विना ॥

इत्युपसंहारादविभक्तैरपि पितृऋणापाकरणाय गयाश्राद्धं पृथगेव कर्तव्यमिति गम्यते।

अत एव वायुपुराणे—

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ॥

इत्यभिहितम् । समवेतानाम् अविभक्तानामित्यर्थः । गयायां पिण्डदानद्रव्याणि—

देवीपुराणे—

सक्तुभिः पिण्डदानञ्च संयावैः पायसेन च ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन च ॥

गुडेन वेति वा पाठः। संयावो गोधूमविकारः । पिण्याकस्तिलकल्कः ।

अग्निपुराणे—

पायसेनाऽऽज्ययुक्तेन सक्तुना चरुणा तथा ।
पिण्डदानं तन्दुलैश्च गोधूमैस्तिलमिश्रितैः ॥

वायुपुराणे—

पायसेनाऽथ चरुणा सक्तुना पिष्टकेन वा ।
तन्दुलैः फलमूलाद्यैर्गयायां पिण्डदो भवेत् ॥

तथा—

तिलाज्यमधुदध्यादि पिण्डद्रव्येषु योजयेत् ।

पिण्डाऽष्टाङ्गता ग्रन्थान्तरे उक्ता—

तिलमन्नं च पानीयं धूपं दीपं पयस्तथा ।
मधु सर्पिःखण्डयुक्तं पिण्डमष्टाङ्गमुच्यते ॥

गयायां संन्यासिना तु तेषु तेषु श्राद्धस्थलेषु पितृस्मरणपूर्वकं दण्डस्पर्शनमात्रं कार्यं नतु श्राद्धतर्पणादि ।

तदुक्तं वायवीये—

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।

दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥

स्पृष्ट्वेत्यन्तर्भावितणिजर्थः । तेन स्पर्शयित्वेत्यर्थः ।

गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयन् भिक्षुः पितृभिः सह मुच्यते ॥
मार्तण्डपादमूले वा श्राद्धे हरिहरं स्मरेत् ॥

मार्तण्डो दक्षिणादित्यस्तस्य चरणे । अत्र पतितानामपि पित्रादीनां प्रथमवर्षानन्तरं श्राद्धं पिण्डदानं वा तत्स्वर्गकामनया कर्तव्यम् ।

क्रियते पतितानान्तु गते सम्वत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद् गयाकूपेषु बन्धुभिः ॥
मार्तण्डपादमूले च श्राद्धं हरिहरं स्मरन् ॥

इति श्राद्धचिन्तामणौ ब्रह्मपुराणेऽभिधानात् ।

इति गयाश्राद्धनिर्णयः ।

अथ नित्यश्राद्धं हेमाद्रौ—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डादिवर्जितम् ।
दातॄणामथ भोक्तॄणां नियमो न च विद्यते ॥
सर्वं सदक्षिणं राजन् नित्यं श्राद्धमदक्षिणम् ।
नामन्त्रणं न होमश्च नाव्हानं न विसर्जनम् ॥
महालये च दर्शे च क्षयाहे च पितुस्तथा ।
नित्यश्राद्धं न कुर्वीत प्रसङ्गात्सिध्यते यतः ॥

आमश्राद्धाऽधिकारिणः—

आपद्यनग्नौ(१) तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धम्प्रकुर्वीत भार्यारजसि संक्रमे ॥

सुमन्तुः—

पाकाभावेऽधिकारः स्याद् विप्रादीनां नराऽधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥

---

(१) श्रौतस्मार्ताग्नीनामभावे इत्यर्थः ।

सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।
न पक्वं भोजयेद्विप्रान् स शूद्रोऽपि कदाचन ॥
भोजयन् प्रत्यवायी स्यान्न च तस्य फलं लभेत् ॥

इति सुमन्तूक्तेः । अस्याऽर्थः—विप्रादीनां त्रैवर्णिकानां देशान्तरगमनादिभिः कारणैरपत्नीकानामसन्निहितपत्नीकानां पाकासम्भवे आमश्राद्धाऽधिकारः स्यादिति । अपत्नीनामित्यनेन पत्न्यन्तरपुत्रशिष्यादि योग्यपाककर्त्रन्तरमुपलक्ष्यते । पाकाभाव इत्यनेनाऽऽमद्रव्यस्य सोमाभावे पूतिकवत् प्रतिनिधित्वमुक्तम् । तथा—

आपद्यनग्नौ तीर्थे च प्रवासे पत्न्यसम्भवे ।
चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः ॥

आमश्राद्धं क्वचिदावश्यकम् ।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससम्वत्सरादृते ॥ इति

आदिशब्देन संक्रान्त्यादिसाधारणनिमित्तकानि गृह्यन्ते। अनेन मासिकाब्दिकञ्च यच्छ्राद्धं तत्पाकेन कर्तव्यम् ।

मृताहञ्च सपिण्डञ्च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥

अन्योऽपि विशेषो मदनपारिजाते गोभिलेनाऽभिहितः—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनाऽसम्भवे हेम्ना कुर्यादामेन वा सुतः ॥ इति

अत्र दर्शरविपितृसुतशब्दाः प्रदर्शनार्थाः, न्यायस्य समानत्वात् । अतः चन्द्रग्रहणेऽप्यावश्यकसपिण्डाद्युद्देशेन श्राद्धाऽधिकारिणा आमश्राद्धादिकं कर्तव्यम् । एवं मासिकेऽपि ज्ञेयम् । अत्र पत्न्यां रजस्वलायां सत्यामपि श्राद्धङ्कर्तव्यम् । अन्यथा दोषस्मरणात् ।

तथा च पितामहः—

रजस्वलायां भार्यायां क्षयाहं यः परित्यजेत्।
स वै नरकमाप्नोति यावदाभूतसम्प्लवम्॥
मासिकानि सपिण्डानि अमावास्यां तथाऽऽब्दिकम्।
अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला॥ इति।

अन्यत्राऽपि—

वैदेशिको वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्याम्।
श्राद्धं मृताहे विदधीत पाकैर्नाऽऽमेन हेम्ना न तु पञ्चमेऽह्नि॥

यत्तूशनसो वचनम्—

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला।
सिद्धान्नेन न कुर्वीत आमश्राद्धं विधीयते॥ इति,

तत्पाकयोग्यस्त्र्यन्तराऽऽभावविषयम्। तथा हारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम्।
अमावास्याऽऽदिनियतं माससंवत्सराहृते॥ इति।

मास इति मासिकम्। यत्पुनः पराशरमरीचिवचनम्—

आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला।
पञ्चमेऽहनि तच्छ्राद्धं न तत्कुर्यान्मृतेऽहनि॥ इति,

तदेतदपुत्रस्त्रीकर्तृकश्राद्धविषयम्। तथाच श्लोकगौतमः—

अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके।
रजस्वला भवेत्सा तु तत्कुर्यात्पञ्चमेऽहनि॥ इति।

यत्तु वचनम्—

सप्ताहात्पितृदेवानां भवेद्योग्या व्रतार्चने॥

इति सप्ताहपर्यन्तमशुचित्वमुक्तम्। तद्रजोनिवृत्त्यभावविषयम्।
रजोनिवृत्ते तु पञ्चमेऽहन्येव। अन्योऽपि विशेषो ग्रन्थान्तरे—

आमश्राद्धं यदा कुर्याद् विधिज्ञः श्राद्धदस्तथा।
हस्तेऽग्नौकरणं कुर्याद् ब्राह्मणस्य विधानतः।
आमश्राद्धं यदा कुर्यात् पिण्डदानं कथम्भवेत्॥

गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन च ।

यत्तु—

आमेन पिण्डं दद्याच्चेद्विमान् पक्वेन भोजयेत् ।
पक्वेन कुरुते पिण्डमामान्नं यः प्रयच्छति ।
तावुभौ मनुजैः प्रोक्तौ नरकार्हौ न संशयः ॥ इति,

तदमावास्याविषयम् । आमश्राद्धे विशेषमाह व्यासः—

आमं ददत्तु कौन्तेय दद्यादन्नं चतुर्गुणम् ।

धर्मप्रदीपे—

आमं चतुर्गुणं दद्यादथवा द्विगुणं तथा ।
हैममष्टगुणं तद्वदामे हैमेऽप्यसौ विधिः ॥
आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च ।
व्यतीपातादिके श्राद्धे नियमान् परिवर्जयेत् ॥
गृहपाकात्समुद्घृत्य सक्तुभिः पायसेन वा ।
पिण्डदानं प्रकुर्वीत हैमे श्राद्धे कृते सति ॥
आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।
विकिरन्नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥
आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम् ।
तृप्तिप्रश्नविरहितं कर्तव्यं मानवैर्ध्रुवम् ॥

धर्मप्रदीपे—

आवाहनाऽग्नौकरणं विकिरं पात्रपूरणम् ।
तृप्तिप्रश्नं न कुर्वीत आमे हैमे कदाचन ॥

आमद्रव्याऽभावे तु व्यासेनोक्तम्—

द्रव्याऽभावे द्विजाऽभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥

अत्राऽपि आमश्राद्धोक्ता विशेषा अवगन्तव्याः । आमश्राद्धे हेमश्राद्धे च भोजनप्रयुक्तानामापोशानकर्मादीनां 'यथा सुखं जुष'

एवं, तृप्ताः स्थेत्यादीनां च द्वारकार्यलोपान्निवृत्तिरवगन्तव्या ।

तृप्तिप्रश्नोऽवगाहश्च जुषप्रश्नो यथासुखम् ।
आमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम् ॥

अवगाहोऽङ्गुष्ठनिवेशनम् । केषुचिदूहोऽप्यवगन्तव्यः । तथाच मरीचिः—

आवाहने स्वधाकारे मन्त्राऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युः आमश्राद्धे विधिःस्मृतः ॥

अस्याऽर्थः—आवाहने आवाहनमन्त्रे पितॄन् हविष अत्तव इति पदस्थाने स्वीकर्तव्य इत्यूहः कार्यः। स्वधाकारे "नमोवः पितर"इत्यादिमन्त्रे 'इष' इतिपदस्थाने आमद्रव्यायेत्यूहः कार्यः। विसर्जने विसर्जनमन्त्रे "वाजे वाजेवत वाजिनो न" इत्यादिके तृप्ता इति पदगत'क्त'प्रत्ययस्थाने लृट्प्रत्ययेन तृप्स्यन्त इत्यूहः कार्यः । अन्यकर्मणि 'ब्राह्मणाङ्गुष्ठनिवेशनादौ' "विष्णो हव्यं रक्षस्व"इत्यादयो मन्त्रा अनूह्याः स्युः । "आमश्राद्धविधिःस्मृतः" इत्यत्राऽऽमश्राद्धग्रहणं हेमश्राद्धस्याप्युपलक्षणार्थम् ।

हेमद्रव्याऽभावे स्मृत्यन्तरोक्तम्—

तृणानि वा गवे दद्यात्पिण्डान्वापि विनिर्वपेत् ।
तिलोदकैः पितॄन् वाऽपि तर्पयेत् स्नानपूर्वकम् ॥
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ।
तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ॥ इति ।

स्मृत्यन्तरेऽपि—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाऽहनि तु सम्प्राप्ते भवेन्निरशनोऽपि वा ॥ इति ।

पात्राऽभावे तु विशेषः स्मृत्यन्तरे प्रोक्तः—

पात्राऽभावे परं कृत्वा पितृयज्ञविधिं नरः ।
निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो नयेत् ॥ इति ।

पितृयज्ञविधिं श्राद्धविधिम् । अत्राऽपि यथासम्भवं व्यवस्था। अङ्गसम्पादनाभावेऽपि स्मृत्यन्तरोक्तम्—

अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
स तदा वाचयेद्विप्रान् सकला सिद्धिरस्त्विति ॥

अतिदरिद्रस्य तु विष्णुपुराणे विशेषो दर्शितः—

सर्वाऽऽभावे वनङ्गत्वा कक्षामूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठेदिति ॥

नमेऽस्ति वित्तं न धनं नचाऽन्यत्
श्राद्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
भुजौ कृतौ वर्त्मनि यातु तस्य ।
इत्येतत्पितृभिर्गीतं भाव्यं भावप्रयोजकम् ।
यः करोति कृतं तेन श्राद्धं भवति भारत ॥

अथ सङ्कल्पश्राद्धमुच्यते ।

सङ्कल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥ इति ।

पात्रपूरणमर्घ्यदानम् । आवाहनस्य समन्त्रकस्य निषेधो न-त्वाऽऽवाहनस्वरूपस्य, तदभावे देवतासान्निध्याऽभावप्रसङ्गात् । ततश्चावाहनमन्त्रमनुक्त्वैव देवान् पितॄन् ब्राह्मणेषु ध्यायेदिति । स्मृत्यन्तरे तु—

सङ्कल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
विकिरश्च न दातव्यः पिण्डांश्चैव न निर्वपेत् ॥ इति ।

तथा—

त्यजेदावाहनञ्चार्घमग्नौकरणमेव च ।
पिण्डांश्च विकिरांश्चैव श्राद्धे सङ्कल्पसंज्ञके ॥

वृद्धशातातपस्तु—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावचनलोपोऽत्र विकिरस्तु न लुप्यते ॥
अक्षय्यं दक्षिणा स्वस्ति सौमनस्यं यथास्थितम् ।

"विकिरस्तु न लुप्यते" इत्यस्य यत्र पिण्डदानं न निषिद्धं, [क्षयाहादौ] तत्रचेत्संक्षेपेण पिण्डरहितं क्रियते; तदा तत्राऽपिण्डकेऽपि विकिरदानमित्यर्थः । सङ्क्षिप्तश्राद्धे विकिरदानमित्येतद् रूप नारायणादिभिरपि लिखितम् ।

अथ नान्दीमुखनिमित्तान्याह—

सङ्ग्रहकारः—

सीमन्तव्रतचौलनामकरणाऽन्नप्राशनोपायन-
स्नानाऽऽधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च ।
पुंसूत्याऽऽवसथप्रवेशनसुतास्याऽवलोकाश्रम
स्वीकारक्षितिपाभिषेकदयिताद्यर्त्तौ च नान्दीमुखम् ॥

सीमन्तं सीमन्तोन्नयनम् । व्रतानि प्राजापत्याग्नेयवैश्वदेवसौम्यगोदानव्रतानि [ब्रह्मचारिकर्तृकाणि]। चौलं चूडाकरणम्। सुतस्य नामनिर्देशः । अन्नप्राशनं सुतस्य प्रथमान्नभोजनम् । उपायनम् उपनयनम् । स्नानं समावर्तनम् । आधानमग्न्याधानम् । विवाहः सुतस्य सुतायाश्च । यज्ञो दर्शपौर्णमासज्योतिष्टोमादिः । तनयोत्पत्तिः पुत्रोत्पत्तिः । प्रतिष्ठासु देवताप्रतिष्ठासु च वापीकूपतडागारम्भादिप्रतिष्ठासु वा । पुंसूतिः पुंसवनम् । आवसथप्रवेशः नूतन गृहप्रवेशः । सुतस्याऽऽस्यावलोकः प्रथमं मुखप्रेक्षणम् । आश्रमस्वीकारो वानप्रस्थाद्याश्रमस्वीकारः । क्षितिपाऽभिषेकः राज्याभिषेकः । दयिताद्यर्तुः भार्यायां प्रथमरजःप्रादुर्भावः । एतेषु निमित्तेषु पुमान्नान्दीमुखं विदध्यादित्यर्थः ।

नान्दीश्राद्धे विशेषः ।

मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥
वृद्धौ तु मातृपूर्वं तु श्राद्धङ्कुर्वीत बुद्धिमान् ।
अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत् ॥

आश्वलायनगृह्यपरिशिष्टम्—"आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्रे" इति । कात्यायनः—'आभ्युदयिके प्रदक्षिणमुपचारः पित्र्यमन्त्रवर्ज्यं जप ऋजवो दर्भा यवैस्तिलाऽर्थः संपन्नमितितृप्तिप्रश्नो दधि बदराक्षतमिश्राः पिण्डा नान्दीमुखान्पितॄनावाहयिष्ये इति पृच्छति" इति । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छति । नान्दीमुखाः पितरः। प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन्वाचयिष्य इति पृच्छति च। नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति । न स्वधां प्रयुञ्जीत । युग्मानाशये दत्तेति । अत्र नान्दीमुखाः पितर इति मातॄणां मातामहानामपि प्रदर्शनार्थम् ।

अथ क्षयाहे किं पार्वणं कार्यमेकोद्दिष्ट वेति विचार्यते उभयथावचनदर्शनात् ।

वर्षे वर्षे तु कर्तव्या मातापित्रोः सुतैः क्रिया ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत् ॥ इति ।

यमोऽप्याह—

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥ इति ।

व्यासस्तु पार्वणम्प्रतिषेधति—

एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः ।

अकृतं तद्विजानीयाद्भवेच्च पितृघातकम् ॥ इति ।

जमदग्निस्तु पार्वणमाह—

आपाद्य सहपिण्डत्वमौरसो विधिवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥ इति ।

शातातपोऽप्याह—

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिः ॥

इत्येवं वचनविप्रतिपत्तौ दाक्षिणात्या व्यवस्थामाहुः—

औरसक्षेत्रजाभ्यां मातापित्रोः क्षयाहे पार्वणमेव कर्तव्यम्, दत्तकादिभिरेकोद्दिष्टमिति जातूकर्णवचनात्।

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥ इति ।

तदसत्—नह्यत्र क्षयाहवचनमस्त्यपितु प्रत्यब्दमिति । सन्ति च क्षयाहव्यतिरिक्तानि प्रत्यब्दं श्राद्धान्यक्षयतृतीया-माघी-वैशाखीप्रभृतिषु। अतो न क्षयाहविषयपार्वणैकोद्दिष्टव्यवस्थापनायालम् । उदीच्याः पुनरेवं व्यवस्थापयन्ति—अमावास्यायां भाद्रपदकृष्णपक्षे वा मृताहे पार्वणमन्यत्र मृताह एकोद्दिष्टमेवेति ।

अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन ॥ इति स्मरणात् ।

तदपि न । अनिश्चितमूलेनानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणविषयाणां वचनानाममावास्या-प्रेतपक्षमृताहविषयत्वेनातिसङ्कोचस्यायुक्तत्वात्, सामान्यवचनानर्थक्याच्च । न च (१)पार्वणवचनानां पितृमातृक्षयाहविषयत्वेन (२)एकोद्दिष्टवचनानां च तदन्यक्षयाहविषयत्वेन व्यवस्था युक्ता । उभयत्रापि मातापि-

(१) 'एकोद्दिष्टवचनानां' घ० पाठः ।
(२) 'पार्वणवचनानां' घ० पाठः ।

तृसुतग्रहणस्य विद्यमानत्वात्। यदपि कैश्चिदुच्यते-मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यात् , निरग्निरेकोद्दिष्टम् ।

वर्षे वर्षे सुतः कुर्यात्पार्वणं योऽग्निमान् द्विजः ।
पित्रोरनग्निमान् विप्र एकोद्दिष्ट मृतेऽहनि ॥

इति सुमन्तुस्मरणात् । तदपि सत्प्रतिपक्षत्वादुपेक्षणीयम् ।

बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च ।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् ॥

इतिस्मरणात्। तदत्र विज्ञानेश्वराचार्यास्त्वेवं निर्णयमादधति—संन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम् ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ॥
सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ।

इतिप्रचेतसः स्मरणात् । अमावास्यायां क्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव ।

अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।

इत्यादिवचनस्योक्तरीत्या नियमवचनपरत्वात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पएव । तत्रापि वंशसमाचारव्यवस्थायां सत्यां सैव व्यवस्थिता । असत्यामैच्छिक इत्यलमतिप्रसङ्गेन ।

## अथ स्त्रीश्राद्धनिर्णयः ।

स्त्रीणां तु क्षयाहादिव्यतिरिक्तश्राद्धेषु पत्या सहैव श्राद्धं कार्यम्। तदाह कात्यायनः—

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राणां तृप्तिरासां यतः स्मृता ॥

मात्रा अंशाः ।

सपिण्डीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।
सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः ॥

बृहस्पतिरपि—

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते स्वधासमम् ।
पितामही च स्वेनैव तथैव प्रपितामही ॥

जातूकर्ण्योऽपि—

क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक् क्रिया ।
केचिदिच्छन्ति नारीणामन्यत्रापि महर्षयः ॥ इति ।

अन्यत्र अन्वष्टकादिष्वपि । तदुक्तम्—

अन्वष्टक्यं तथा वृद्धिं मातुः श्राद्धं मृतेहऽनि ।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीणां नान्यत् पृथक् भवेत् ॥ इति

शातातपोऽपि—

नान्दीमुखेऽष्टके श्राद्धे गयायां च मृतेऽहनि ।
पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥ इति ।

गारुडेऽपि—

अन्वष्टकासु यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम् ।
पितुः पृथक् प्रदातव्यं स्त्रीषु पिण्डं सपिण्डता ॥ इति

कार्ष्णाजिनिरपि—

अष्टकादिषु वृद्धौ च गयायां च मृतेऽहनि ।
मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह ॥ इति ।

षट्त्रिंशन्मतेऽपि—

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
न पृथक् पिण्डदानं तु तस्मात्पत्नीषु विद्यते ॥

मातुः श्राद्धे विशेष उक्तः प्रयोगपारिजाते—

माता मङ्गलसूत्रेण मृता यदि च तद्दिने ।
उद्दिश्य विप्रपङ्क्तौ तु भोजयेच्च सुवासिनीम् ॥
स्त्रीणां श्राद्धेषु देयाः स्युरलङ्कारास्तु योषितः ।
मञ्जरीमेखलादामकर्णिकाकङ्कणादयः ॥

तथाच स्मृत्यन्तरे—

भर्तुरग्रे मृता नारी सहदाहमृतापि या ।
सुवासिनीं नियुञ्जीत तस्याः श्राद्धे द्विजैः सह ॥ इति ।

## अथ संन्यासिश्राद्धनिर्णयः ।

तत्र प्रचेताः—

दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्तव्यं पार्वणं तस्य सर्वदा ॥ इति ।

शातातपः—

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥

उशनाः—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥
सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

**अथ पार्वणप्रसङ्गाद्विधवाकर्तृकपार्वणं निर्णीयते ।**

तदुक्तं स्मृतिसङ्ग्रहे—

चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानं तथा भवेत् ।

तथा—

श्वश्रूणां च विशेषेण मातामह्या अपि स्मृतम् ।

विशेषेण कालतीर्थविशेषणेत्यर्थः । विधवायाः पूर्वं मातुः पार्वणं पश्चात्पितुः । कथम्? मातापित्रोरित्यत्र यद्येकशेषःस्यात्तदा क्रमो न प्रतीयेत । मातापित्रोरिति मातृशब्दस्य पूर्वश्रवणात् पाठक्रमादेवार्थक्रमो लभ्यते । 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इति वद्विरुद्ध-

स्वाभावात्। सम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेन च प्रथमं माता श्राद्धभाक्, ततः पितेति गम्यते। किञ्च 'शोणितातिरेके स्त्री भवति' इति श्रुत्या मातुरवयवानां स्त्रियामाधिक्यप्रतिपादनादेव स्त्रीकर्तृकत्वे मातापित्रोर्मातुरेव प्रथमं श्राद्धदानं युक्तम्। विस्तरासम्भवे विधवा पार्वणद्वयं कुर्यात्।

तदुक्तं स्मृतिसमुच्चये—

भर्तृहीना तु या नारी प्रकुर्यात्पार्वणद्वयम्।
एकं तु भर्तृपक्षस्य पितृपक्षस्य चापराम्॥

तथा—

स्वभर्तृप्रभृति त्रिभ्यः स्वपितृभ्यस्तथैव च।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता॥
अपसव्यं कथं स्त्रीणां श्राद्धकार्ये भवेत्तदा।
अञ्चलस्यैव निक्षेपो वामदक्षिणयोर्भवेत्॥

## अथाविभक्तकर्तृकश्राद्धनिर्णयः।

तत्र पैठीनसिः—

विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादिकम्।
एकेनैवाविभक्तेन कृते सर्वैस्तु तत्कृतम्॥ इति।

मरीचिः—

भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥

'एको धर्मः प्रवर्तते' इदन्त्वेकपाकविषयमविभक्तौ चापि पृथक्पाकपक्षे प्रत्येकमेव श्राद्धादिकं कर्तव्यमित्युक्तं श्राद्धचिन्तामणौ हारीतवाक्यानुरोधेन। तच्च वाक्यम्—

भ्रातृणामविभक्तानां पृथक् पाको भवेद्यदि।
वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक् पृथक्॥ इति।

अन्योऽपि विशेषस्तत्रैव यमेनाभिहितः—

अविभक्तेन पुत्रेण पितृमेधो मृताऽहनि।

स्थानान्तरे पृथक् कार्यो दर्शश्राद्धं तथैव च ॥ इति ।

संसृष्टिनामप्येकेनैव श्राद्धादिकं कार्यमित्युक्तं चमत्कारचिन्तामणौ ।

वसतामेकपाकेन विभक्तानामपि प्रभुः ।
एकस्तु चतुरो यज्ञान् कुर्याच्छ्राद्धादिकं तथा ॥ इति ।

अथ जीवत्पितुर्यत्र श्राद्धनिषेधस्तदुच्यते ।

यथाह लौगाक्षिः—

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥ इति ।

क्रतुरपि—

अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते छायापूज्यस्य चागतौ ॥
जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम् ॥ इति ।

अत्राष्टका अन्वष्टकाव्यतिरिक्ता एव । अन्वष्टक्ये(१) श्राद्धविधानात् ।

तदुक्तं मैत्रेयगृह्यपरिशिष्टे—

अन्वष्टक्ये गयाप्राप्तौ सत्यां यच्च मृताहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥ इति ।

अत्र गयाप्राप्तौ सत्यामिति दैवात् प्रासङ्गिकप्राप्तौ गयायां श्राद्धविधायकम् । 'अमाश्राद्धं गयाश्राद्धम्' इति तु श्राद्धोद्देशेनैव गयां गत्वा तत्र श्राद्धं न कर्तव्यमित्येतत्परम् । अतश्च न विरोधः ।

अथ पार्वणश्राद्धानुक्रमणी लिख्यते—

श्राद्धस्य चन्द्रमोमिश्रैः पार्वणस्योच्यते क्रमः ।
निरामिषैकभक्ताशी पूर्वेद्युर्विजितेन्द्रियः ॥
स्वयं द्विजो द्विजैर्वापि द्विजान्सायं निमन्त्रयेत् ।
प्रातः श्मश्रुनखच्छेदं सुस्नानीयमथार्पयेत् ॥

(१) मातृनवम्यामित्यर्थः ।

सामग्रीसहितः स्नातो मध्याह्ने श्राद्धमारभेत् ।
आहूय स्वागतं पृच्छेच्चरणौ क्षालयेत्ततः ॥
पादार्घदानाचमने श्राद्धदेशोपवेशनम् ।
पूरणं कर्मपात्रस्य प्राणायामस्मृतिं ततः ॥
कुर्वीत पुण्डरीकाक्षदेवस्य त्रिर्जपेत्ततः ।
देवताभ्य इति श्राद्धप्रतिज्ञामासनार्पणम् ॥
आवाहनं दैवकर्मपूर्वं सर्वं समाचरेत् ।
हस्तार्घदानं पात्रस्य न्युब्जीकरणमर्पणम् ॥
गन्धादीनां वाससोऽपि कुर्यादाचमनं ततः ।
अग्नौकरणकं पात्रालम्भनं शेषरक्षणम् ॥
तिलान्विकीर्य देवादि कुर्वीत परिवेषणम् ।
अवगाह्य तथाऽङ्गुष्ठमन्नसङ्कल्पमाचरेत् ॥
अपोशानक्रियोङ्कारव्याहृतिप्रथमां जपेत् ।
गायत्रीं पित्र्यमन्त्रादीन् विकिराचमने ततः ॥
कुर्याच्चुलुकदानं च गायत्री मधुमध्विति ।
जपेत्तृप्तांस्ततः पृच्छेच्छेषान्नाज्ञामवाप्य च ॥
वेदिकालेपनैरेषा करणोल्मुकधारणे ।
कुर्यादास्तीर्य च कुशानवनेजनमप्यथ ॥
दद्यात्पिण्डानथाचामेद् दक्षिणाभिमुखो जपेत् ।
कुर्यात्प्रत्यवनेज्याथ नीवीविस्रंसनं तथा ॥
षडञ्जलीन् सूत्रदानमूर्जस्यकरणं जपेत् ।
देवताभ्य इतित्रिश्च पिण्डार्च्चं विदधीत च ।
द्विजानाचम्य सकुशजलाद्येभ्यः समर्पयेत् ॥
मूर्द्धाभिषेकमक्षय्योदकदानमथाशिषाम् ।
ग्रहणं विदधीताथ स्वधावाचनमाचरेत् ॥
अर्घ्यपात्रोत्थापनञ्च दक्षिणादानमप्यथ ।

पिण्डानुत्थाप्य कुर्वीत देवब्राह्मणवाचनम् ॥
देवताभ्य इति त्रिश्च जपेदथ विसर्जयेत् ।
अथाचम्य नमस्कुर्याद्दिवाकरमिति क्रमः ॥ इति ।

अथ श्राद्धकर्त्तुर्भोजनविधिरभिधीयते ।

मार्कण्डेयपुराणे—

ततो नित्यक्रियां कुर्याद् भोजयेच्च तथाऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सहभृत्यादिभिर्नरः ॥

अनेन उपवासनिषेधो गम्यते । अत एव देवलः—

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते वै कदाचन ।
देवा हविर्न गृह्णन्ति कव्यानि पितरस्तथा ॥

परान्ननिषेधोऽपि—

योऽश्नाति परगेहेषु श्राद्धं कृत्वा तु तद्दिने ।
श्राद्धशेषं च नाश्नाति स चापि श्राद्धहा भवेत् ॥

आचार्योऽपि—

ततः करोति नित्यानि बन्धुभिः सह भुञ्जति ।
श्राद्धशेषमभुञ्जानः कर्त्ता निरयमृच्छति ॥

एतच्च पितृसेवितभोजनं सर्वविधात्किञ्चिदुपादाय कर्तव्यम् ।

तथाच मत्स्यपुराणे—

ततश्च वैश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥

सामोत्पत्तौ तु—

वनस्पतिगते सोमे परान्नं यस्तु भुञ्जति ।
तस्य मासकृतो होमो दातारमधिगच्छति ॥
श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये विचक्षणाः ।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥
उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।

उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

यत्तु देवलवचनम्—

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् ।
हविर्देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥ इति ।

तद् एकादशीव्यतिरिक्तविषयम् । आघ्राणेनापि भोजनकार्यं सिद्ध्यति, तस्य भोजनकार्ये विधानादिति । एतद्भोजनं रात्रौ न कर्तव्यमित्युक्तम्

सङ्ग्रहे—

अयने रविसंक्रान्तौ रविवारेषु पर्वसु ।
मृताहे जन्मदिवसे न कुर्याद्रात्रिभोजनम् ॥

अथोच्छिष्टमार्जनं हेमाद्रौ—

चालयेद् भुक्तपात्राणि प्रथमं स्वस्तिवाचनात् ।
सूर्येऽस्तमित उच्छिष्टं संमार्ज्य निखनेद्भुवि ॥ इति ।

अत्र शूद्रायान्नं निषेधति मनुः—

श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥ इति (३।२४९)

यस्य तु गृहान्तरमस्ति तेन तु अस्तमयादुपरि तदुच्छिष्टं संशोधनीयम् । तद्दिने शूद्रस्य श्राद्धशेषभोजनदाने निषेधमाह आचार्यः ।

न शूद्रं भोजयेत्तस्मिन् गृहे यत्नेन तद्दिने ।
श्राद्धशेषं न शूद्रेभ्यो ददाति चाऽखिलेष्वपि ॥
शूद्रादीन् भोजयेत् यो वै दैवे श्राद्धे च मानवः ।
तस्य निष्फलतां याति श्राद्धं दैवं च तत्क्षणात् ॥

**अथ अनग्निकवैश्वदेवकालो विधीयते ।**

प्रातिवासरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

अनेन अनग्निकस्य श्राद्धात्पूर्वं श्राद्धपाकेन पाकान्तरेण वा सर्वथा वैश्वदेवो न कर्तव्य इत्युक्तं भवति ।। साग्निकस्य तूत्तरत्र श्राद्धात्प्रागेव कर्तव्यताविधानात् । श्राद्धमध्ये तु वैश्वदेवं कार्यम् ।

ब्रह्माण्डपुराणे—

वैश्वदेवाहुतीरग्नावर्वाक् ब्राह्मणभोजनात् ।
जुहुयाद् भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम् ॥ इति ।

'अर्वाग्ब्राह्मणभोजनात्' इत्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तं भवति । 'श्राद्धं कृत्वा भूतयज्ञादि स्मृतम्' इत्यनेन भूतयज्ञादेरेव श्राद्धान्ते कर्तव्यता भवति । एतद्वचनं पृथक्पाकविषयम् । पाकैक्ये दोषस्य वक्ष्यमाणत्वात् । अयमेकोऽनग्निकवैश्वदेवकालः । द्वितीयोऽपि भविष्यपुराणे—

पितॄन्सन्तर्प्य विधिवद्बलिं दद्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात् कुर्यात् ब्राह्मणवाचनम् ॥ इति ।

बलिशब्दोपि तत्रैव व्याख्यातः—

येऽअग्निदग्धामन्त्रेण भूमौ यन्निक्षिपेद् बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा ॥ इति ।

अनेन विकिरणसंज्ञकबलिप्रदानानन्तरं स्वस्तिवाचनात्पूर्वं वैश्वदेवं कुर्यात् , इत्युक्तं भवति । इदमपि पृथक्पाकविषयम् , श्राद्धस्य निर्वृत्तत्वात् । अयं तु द्वितीयः कालः । तृतीयोऽपि स्मृतिपुराणादौ उक्तः ।

तत्राह मनुः—

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ (३।२६५)

अस्य च मेधातिथिकृता व्याख्योच्यते—भुक्तवत्सु द्विजेषु यद्विकिरणपात्रस्थमन्नं भूमौ निपातितं तत्तस्माद्देशात्तावन्न मार्ष्टव्यम् ।

यावद् ब्राह्मणा न निष्क्रान्ताः। ततो निष्पन्न श्राद्धकर्माणि अनन्तरं वैश्वदेवादिकं कर्तव्यम् बलिशब्दस्य प्रदर्शनार्थत्वादिति।

भविष्यपुराणे—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप॥ इति।

पैठिनसि—

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा॥ इति।

तदेवमुक्तास्त्रयोऽनग्निकवैश्वदेवकालाः-एकोऽग्नौकरणानन्तरं, द्वितीयस्तु विकिरणादुपरि, तृतीयो ब्राह्मणविसर्जनात्पश्चादिति।

अत्र स्मृतिसङ्ग्रहे विशेष उक्तः—

वृद्धावादौ, क्षयाहेन्ते, दर्शे मध्ये, (१)महालये।
आचान्तेषु च कर्तव्यं वैश्वदेवं चतुर्विधम्॥

अत्र वृद्धाचारतो व्यवस्था द्रष्टव्या।

इत्यनग्निकवैश्वदेव कालनिर्णयः।

## अथ साग्निकवैश्वदेवकाल निर्णयः।

तत्र लौगाक्षिः—

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुध॥ इति।

पक्षान्तंकर्मान्वाधानम्। अन्वाहार्यकं दर्शश्राद्धम्। तच्चाने-कदैवत्यश्राद्धोपलक्षणार्थम्। ततश्चैकादशाहिकव्यतिरिक्तेषु श्राद्धेषु सर्वत्र साग्निकस्य पूर्वमेव वैश्वदेवः।

तथाच शाकल्यायनः—

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः।

---

(१) अन्नदानानन्तरं विप्रभोजनारम्भात्प्राक् इत्यर्थः।

एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥

इति साग्निकवैश्वदेवकालनिर्णयः ।

अथ वैश्वदेवपाकनिर्णयः ।

तत्र पित्रर्थपाकेन वैश्वदेवकरणे दोषमाह पैठिनसिः—

पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ इति ।

एतत्सर्वं श्राद्धादौ मध्ये चानुष्ठीयमानवैश्वदेवविषयम् । श्राद्धान्ते तु श्राद्धशेषस्य वैश्वदेवे विनियोग उक्तः पैठीनसिना—

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा ॥

पिण्डदानात्पूर्वं पितृपाकेन वैश्वदेवादिकं न कुर्यात् ।

गृह्याग्निशिशुदेवेभ्यो यतये ब्रह्मचारिणे ।
पितृपाको न दातव्यो यावत्पिण्डान्न निर्वपेत् ॥

यानि पृथक्पाकवैश्वदेवाभिधायिकानि वाक्यानि तानि प्रेतश्राद्धविषयाणि, 'शेषं ब्राह्मणेभ्यः समुत्सृजेत्' इति देवलेनाभिधानात् । यदि शेषप्रश्ने अयमभिसन्धिः । यदि संवत्सरे सपिण्डीकरण तदा मध्ये यान्यूनमासिकादीनि श्राद्धानि भवन्ति, तत्र वैश्वदेवं पृथक्पाकेनैव भवति, शेषान्नाभावात् । यदि द्वादशाहे सपिण्डीकरणं तदैकादशेऽह्नि ब्राह्मणैः पृथक्पाकेनैव वैश्वदेव इत्युभयथा पृथक्पाकः । 'अस्मभ्यं दीयताम्' इति द्विजा ब्रूयुस्तदा शेषाभावात् पृथक्पाकेन वैश्वदेवकर्म स्यात् ।

वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ॥
यती च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥

इत्यादीनि श्राद्धपाकव्यतिरिक्तविषयाणि ।

## अथ श्राद्धाङ्गतिलतर्पणविधिरुच्यते ।

तत्र गर्गः—

पूर्वं तिलोदकं दत्त्वा अमाश्राद्धं तु कारयेत् ।
प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ॥

अमा अमावास्या ।

(१)पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ॥ इति ।

( पारिजाते—

प्रत्यब्दाङ्गतिलं दद्यान्निषिद्धेऽपि परेऽहनि ।
वर्गैकस्य वचो येषामन्येषां तु विवर्जयेत् ॥ इति ।

सङ्ग्रहे—

दर्शे तिलोदकं पूर्वं क्षयाहे च परेऽहनि ।
महालये च पिण्डान्ते सकृच्छ्राद्धे परेऽहनि ॥
स्नात्वा नीरं समागत्य उपविश्य कुशासने ।
सन्तर्पयेत्पितॄन्सर्वान्स्नात्वा वस्त्रं च धारयेत् ॥ इति) ।(२)

तस्य विधानमाह सङ्ग्रहकारः—

अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।
नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ॥

तिलाभावे आह गोभिलः—

तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥(३)

स्मृत्यन्तरेऽपि—

तिलाभावे राजतेन खड्गहेमकुशैरपि । इति ।

---

(१) महालयश्राद्धे हेमश्राद्धे च विप्रविसर्जनान्ते तिलतर्पणं कार्यमित्यर्थः ।

(२) कंसान्तर्गतो ग्रन्थः 'ख' पुस्तके नास्ति ।

(३) नित्यतर्पणाभिप्रायमिदम् ।

तिलतर्पणरहितश्राद्धान्युच्यन्ते बृहन्नारदीये—

वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धेऽनुमासिके ।
संवत्सर(१)विमोके च न कुर्यात्तिलतर्पणम् ॥ इति ।

इति तिलतर्पणविधिः ॥

तिलतर्पणनिषेधस्तदपवादश्चोच्यते(२) ।

सङ्ग्रहे—

नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

वृद्धमनुः—

सप्तम्यां भानुवारे च मातापित्रोः क्षयेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥

तिलतर्पणनिषेधापवादौ स्नानाङ्गतर्पणव्यतिरिक्तपितृतर्पणविषयौ ।

तदाह वृद्धमनुः—

संक्रान्त्यादिनिमित्ते तु स्नानाङ्गे तर्पणे द्विजः ।
तिथिवारनिषेधेऽपि तिलैस्तर्पणमादिशेत् ॥
भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥
उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे ।
निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥(३)

---

(१) आब्दिकोत्तरदिनविहितमेतन्नामकं श्राद्धम् ।
(२) प्रसङ्गान्नित्यतर्पणविषयोऽयं विचारः ।
(३) श्लोकौ 'क' पुस्तके नस्तः ।

व्यतीपातग्रहणेन वैधृतेर्ग्रहणम्। पितृग्रहणं पितृव्यादिश्राद्धसङ्ग्रहार्थम्। अमावास्याग्रहणं सकलश्राद्धतिथेरुपलक्षणम्। संक्रान्तिग्रहणमयनद्वयव्यतिरिक्तसंक्रान्तिविषयम्।

तीर्थे तीर्थविशेषे च गयायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्॥

गर्गः—

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम्॥
निःपीडयति यः पूर्वं स्नानवस्त्रमतर्पितम्।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम्॥

पाराशरः—

द्वादश्यां पञ्चदश्यां च संक्रान्तौ रविवासरे।
वस्त्रनिष्पीडनं नैव न च क्षारेण योजयेत्॥

तिले विशेषमाह गोभिलः—

शुक्लैस्तु तर्पयेद्देवान्मनुष्याञ्छ बलैस्तिलैः।
पितॄंस्तु तर्पयेत्कृष्णैस्तर्पयेत्सर्वतो द्विज॥ इति।

तत्र तिलग्रहणविधिमाह मरीचिः—

मुक्तहस्तेन दातव्यं मुद्रां तत्र न दर्शयेत्।
वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणः॥ इति।

मुद्रा प्रदेशिन्यङ्गुष्ठ सन्धियोगः। एतद्वामहस्ते तिलग्रहणे स्थानविशेषं व्यतिरेकेणाह सङ्ग्रहकारः—

(१)हस्तमूले तिलान् क्षिप्त्वा यः कुर्यात्तिलतर्पणम्।
तज्जलं रुधिरं ज्ञेयं ते तिलाः कृमिसंमिताः॥ इति।

तत्राप्यलोमकस्थाने तिलान्निक्षिपेत् इति व्यतिरेकेणाह गोभिलः—

रोमसंस्थांस्तिलान्कृत्वा यस्तु तर्पयते पितॄन्।

(१) 'सलोमप्रदेशे' इत्यर्थः।

पितरस्तर्पितास्तेन रुधिरेण मलेन वा ॥ इति ।

एतत्सर्वमनुद्धृतोदकतर्पणाभिप्रायम्, उद्धृते तु विशेषाभिधानात् ।

तथाच योगियाज्ञवल्क्यः—

यद्युद्धृतं निषिञ्चेत्तु तिलान्सम्मिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

अन्यथा अनुद्धृते । दर्भधारणे विशेष उक्तः । स्मृतिभास्करे—

कुशाग्रैस्तर्पयेद्देवान् मनुष्यान्कुशमध्यतः ।
द्विगुणीकृत्य मूलाग्रैः पितॄन्सन्तर्पयेद्द्विज ॥ इति ।
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥
उभाभ्यामपि हस्ताभ्यामपराजितदिङ्मुखः ।
संवृताङ्गुष्ठकाभ्यां तु सव्योपग्रहमेव च ॥
तृप्यन्त्विति समुच्चार्य तृप्यतामित्यथापि वा ।
विधिज्ञः प्रक्षिपेत्तोयं देवादीनां विशेषतः ॥ इति ।

अपराजितादिक् ऐशानी । सङ्ग्रहेऽपि—

एकहस्तेन तोयेन न कुर्यात्पितृतर्पणम् ।
पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः ॥

यत्तु व्याघ्रेणोक्तम्—

उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

तच्छ्राद्धादिविषयम् । अत एव कार्ष्णाजिनिः—

श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष सनातनः ॥ इति ।

एतत्तर्पणमुदकादौ न कार्यम् । तथाच गोभिलः—

स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम् ॥

शातातपः—

देवान्पितॄन्मनुष्यादीन्स्वशाखाविधिनोदितान्।
एकैकाञ्जलिना तृप्तिं प्रथमान्तेन वाचयेत्॥

अञ्जलिसंख्या उक्ता व्यासेन—

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रींस्त्रियं चैकैकमञ्जलिम्॥

स्मृतिरत्नावल्याम्—

मातृमुख्यास्तु यास्तिस्रस्तासां दद्याज्जलाञ्जलीन्।
त्रींस्त्रींस्तु दद्यादन्यासां दद्यादेकैकमञ्जलिम्॥

स्मृतिसङ्ग्रहे—

सम्बन्धमनुकीर्त्यैव नामगोत्रमनन्तरम्।
वस्वादिरूपं सङ्कीर्त्य स्वधाकारेण तर्पयेत्॥

अन्यत्र तु—

मातुस्त्रीनञ्जलीन्दद्यादन्यासामेकमञ्जलिम्।
सापत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जलीन्॥

स्मृतिसङ्ग्रहे—

सम्बन्धमनुकीर्त्यैव नामगोत्रमनन्तरम्।
वस्वादिरूपं सङ्कीर्त्य स्वधाकारेण तर्पयेत्॥

यमः—

सम्बन्धो नामगोत्रेण स्वधान्तेन नमोऽन्ततः।
वस्वादिरूपं निर्दिश्य तर्पयेत्पितृपूर्वकम्॥

नामग्रहणे विशेषमाह बौधायनः—

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः॥

इति श्री महाराजाधिराजसहगिलान्वयैकभूषणपरमा-
नन्दादिष्ट 'धर्माधिकारि' रामपण्डितात्मज पण्डित
विनायककृतायां श्राद्धकल्पलतायां विकृति-
श्राद्धनिरूपणस्तम्बकश्चतुर्थः॥

## अथ नवश्राद्धानि ।

तानि च यथोक्तदाहादिसंस्कृतस्य भवन्तीति तदुपयोगितया तावत्संस्कारो निरूप्यते ।

तत्रादावग्निनिर्णयः । तत्राऽऽहिताग्नेः श्रौतेनानाहिताग्नेः स्मार्तेनेतरस्य लौकिकेनाग्निना दाहः कर्तव्य इत्याह—

वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥ इति ।

( मि० पृ० २९९ )

अत्र विद्यमानेष्वग्निषु तैरेव, तदभावे प्रेताधानमेवेति । एकेनौपासनेन । अत एव बौधायनः—"औपासनेन गृहिणाम्" इति ।

ब्राह्मेऽपि—

अनाहिताग्नेर्देहस्तु दाह्यो गार्ह्याग्निना द्विजैः ।

औपासनेऽपि विद्यमाने तेनैव, तदभावे प्रेतोपासनेनेति । इतरो ब्रह्मचारि-विधवा-प्रमुखः,

तदाह याज्ञवल्क्यः--

"आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः ।
यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ॥
स दग्धव्यः" इति । (३।२।)

तथा लौकिकेऽपि कश्चिन्निषेधतिदेवलः--

चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः ॥ इति ।

( मि० पृ० २९९ )

शूद्रेण चाग्निकाष्ठाद्यानयनं श्मशाने न कारणीयम् ।

तदाह यमः—

यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च ।
प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते ॥ इति ।

( मि० पृ० २९९ )

अत्रापरं विशेषमाह क्रतुः—

विधुरं विधवां चैव कपालस्याग्निना दहेत् ।
यतिश्च ब्रह्मचारी च दाह्य उत्तपनाऽग्निना ॥
तुषाऽग्निना च दग्धव्या कन्यका बाल एव च । इति ।
अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत् ।
करीषादिस्ततो योऽग्निर्जातः स तु कपालजः ॥

इति कपालाग्निः । उत्तपनाग्निस्तु—

दर्भैरग्निं तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः ।
पुनर्दर्भे तृतीयेऽग्निरेष उत्तपनीयकः ॥

आहिताग्नेस्तत्पत्न्याश्च श्रौतेनैवेत्युक्तं ब्रह्मपुराणे—

आहिताग्न्योश्च दम्पत्योर्यश्चादौ म्रियते भुवि ।
तस्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ॥
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना ।

आहिताग्नेर्भार्याया अपि मरणे अग्निहोत्रेणैव तस्या दाहः कार्यः । तदुक्तं क्रतुना—

एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।

पूर्वमृताम् ।

दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥

याज्ञवल्क्योऽपि—

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥

अनेकभार्यं प्रत्याह शौनकः—

पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः ।
आदधीताऽन्यया सार्धमाधानविधिना गृही ॥ इति ।

तेनैव वैतानेनैव । एतज्ज्येष्ठाया एव मरणे,

कनिष्ठां तु मृतां पूर्वं दहेन्निर्मन्थ्यवन्हिना ।

इति विशेषस्मरणात्, तथा—

द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः।
तिष्ठन्त्यां प्रथमायां हि सुरापानसमं भवेत् ॥

इति निषेधाच्च। अत्रापि विद्यमाने श्रौते स्मार्ते चाग्नौ तेनैव पत्न्या दाहस्तदभावे प्रेतात्वात् प्रेतोपासनाभ्यामिति। सहमरणे तु सहैव पितृमेधः। यद्वाऽनाहिताग्निपत्नीं निर्मन्थ्येन दहेत्। 'औपासनेनाहिताग्निं दहेन्निर्मन्थ्येन पत्नीम्' इति विष्णुवचनात्। अत्रापरे विशेषा याज्ञिकतन्त्राज्ज्ञेयाः। स चायं दाहो रात्रिमृतस्य रात्रावेव कार्य इत्युक्तं स्मृतिसंग्रहे—

रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम्।
वपनं नेष्यते रात्रौ श्वस्तदा वपनक्रिया ॥

देवजानीयेऽपि—

रात्रौ वा रात्रिशेषे च म्रियन्ते ये द्विजातयः।
दाहं कृत्वा यथान्यायं द्वौ पिण्डौ निर्वपेत्सुतः ॥

रात्रौ वा तच्छेषे वा मृतस्य दाहे क्रियमाणे सूर्योदयश्चेत्तदा प्रातरवयवपिण्डद्वयं दद्यात्।

रात्रिदाहे वपनं प्रातरेव, "वपनं नेष्यते रात्रौ" इति वचनात्। पर्युषितदाहे प्रायश्चित्तमप्युक्तं स्मृतिरत्नावल्याम्—

शवं रात्र्युषितं चेत्त्रीन् कृत्वा कृच्छ्रान्दहेत्सुतः। इति।

धर्मतत्त्वालोकेऽपि—

दिवा वा यदि वा रात्रौ शवं तिष्ठति कर्हिचित्।
तत्पर्युषितमित्याहुर्दहने तस्य का गतिः ॥
पञ्चगव्येन संस्नाप्य प्राजापत्यत्रयं चरेत्।

यत्तु निगमवाक्यम्—

सन्ध्यायां च तथा रात्रौ दाहः पाथेयकर्म च।
नवश्राद्धं च नो कुर्यात्कृतं निष्फलतां व्रजेत् ॥ इति,

तद्दिनमृतस्याऽऽस्यादिना रात्रिदाहनिषेधपरमिति। रा-

त्रिदाहेऽपरोऽपि विशेष उक्तः स्कन्दपुराणे—

यदि रात्रौ भवेत्तस्य समाप्तिर्दहनस्य च।
परेऽह्न्युदिते सूर्ये कार्या तस्योदकक्रिया॥
दग्धस्य तु नवै कार्या रात्रौ जातूदकक्रिया।

धर्मतत्त्वालोकेऽपि—

तिलोदकं पिण्डदानं नग्नप्रच्छादनं तथा।
रात्रौ न कुर्यात्सन्ध्यायां यदि कुर्यान्निरर्थकम्॥

अथ दाहकालेऽग्निनाशे विशेषमाह यमः—

यजमाने चितारूढे पात्रन्यासे तथा कृते।
वर्षाद्यभिहते चाग्नौ ततः पृच्छामि याज्ञिकाः॥
शेषं दग्धावदग्धेन निर्मन्थ्यं तत्र कारयेत्।
शेषालाभे तथा कुर्याद्दग्धशेषस्य वा पुनः॥
अप्सु प्रास्यन्ति शेषं तमाग्नेयास्ताः स्मृता बुधैः।

शेषमरणीप्रभृतिकाष्ठशेषं दग्ध्वा दग्धेनैवाग्न्युत्पादनसमर्थेन निर्मन्थ्यं कृत्वाऽग्निमुत्पाद्य तेनाग्निना दहेत्। अरण्यादिकाष्ठशेषालाभे दग्धशेषकाष्ठस्य सम्बन्धी यो मथिताग्निस्तेन, तस्याप्यभावे अप्सु प्रक्षिपेदित्यर्थः। एवमनाहिताग्नेरपि, न्यायसाम्यात्। इयान् विशेषो यदरण्यभावान्मन्थाभाव इति मदनः। दाहश्च नग्नस्य न कार्य इत्याह प्रचेताः—

नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत्।

जटमल्लविलासे ब्रह्मपुराणमपि—

दरिद्रोऽपि न दग्धव्यो नग्नः कस्याञ्चिदापदि।
केनापि वस्त्रखण्डेन छादनीयः प्रयत्नतः॥
यत्र तत्र भवेद्दुःखी यदि नग्नस्तु दह्यते॥

शवस्य चण्डालादिस्पर्शे प्रायश्चित्तमुक्तं धर्मप्रदीपे—

चण्डालसूतिकोदक्यास्पृष्टे प्रेते तथैव च।
तस्य पापविशुद्ध्यर्थं कृच्छ्रान्पञ्चदशाचरेत्।

तथोर्ध्वदैहिकं कर्म नरैः कार्यं यथाविधि ॥

अथ दाहाद्यपवादः । तत्र मनुः—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥
नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया ।
अरण्ये काष्ठवत् त्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥ ( ५।६८ )

निदध्युर्निखनेयुः ।

ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद् भुवि ।
यमगाथा गायमानो यमसूक्तमनुस्मरन् ॥

इति यमवचनात् । संन्यासिनामपि न दाहः ।

तदुक्तं दिवोदासे ब्रह्मपुराणे—

त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः ।
यतेः किञ्चिन्न कर्तव्यं नवाऽन्येषां करोति सः ॥

ब्राह्मेऽपि—

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य वा ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥

महाभारतेऽपि—

न दग्धव्यो न दग्धव्यो विदुरोऽयं कादाचन ।
ज्ञानदग्धशरीरस्य पुनर्दाहो न विद्यते ॥

एतदेकदण्डिपरम् । त्रिदण्डिनां तु दाहो वक्ष्यते । पतितानामपि न दाहः ।

तदुक्तं क्वाहरे ब्राह्मे—

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डश्च कार्यं श्राद्धादिकं क्वचित् ॥
( परा० विद्व० पृ० १३३ )

आत्मघातिनामपि न दाहः । तदुक्तं मदने—

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गंगातोये संस्थापनं स्मृतम् ॥ (मि० २९८)

आपस्तम्बोऽपि—

व्यापादयेदिहात्मानं स्वयं योऽग्न्युदकादिभिः।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया॥

मनुरपि—

वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम्।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया॥ (५–८९)
विषोद्बन्धनशस्त्राद्यैरात्मानं यस्तु घातयेत्।
मृतोऽमेध्येन लेप्तव्यो नाऽन्यं संस्कारमर्हति॥(शु० च० १०६)

इति पराशरस्मरणं च। अमेध्येन मूत्रादिनाऽतिप्रसङ्गनिवृत्तये राज्ञा लेपनीय इत्याहुः। तदेतत्प्रायश्चित्ताकरणे। प्रायश्चित्तकरणे तु पतितात्मघातिनोरपि सम्वत्सरानन्तरं दाहादिकं कर्तव्यमिति वक्ष्यते। तथाऽन्येषामपि—

याज्ञवल्क्यः—

पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः॥ (३।६)

वेदबाह्यलिङ्गधारणं पाखण्डम्। अनाश्रिताः सत्यधिकारे आश्रमरहिताः। स्तेना ब्राह्मणस्वर्णव्यतिरिक्तस्य। सुराप्य इत्यादिषु लिङ्गमविवक्षितमुद्देश्यगतत्वादिति मिताक्षराव्याख्या। लाहरव्याख्या तु पाखण्डानाश्रिताः पाखण्डान् बौद्धादीनाश्रितास्तद्दीक्षायां प्रविष्टा इति। तथा शास्त्रविहितमार्गेणेच्छापूर्वकं मृतानामपि न दाहः।

तदुक्तमङ्गिरसा—

चण्डालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम्॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति॥

तथा लाहरेऽपि—

नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च।

ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

ब्रह्मदण्डो ब्रह्मशापः, कटः शवखट्वा । विष्णुदाल्भ्यसंवादेऽपि—

जलाग्निमहिषीभिस्तु मृताश्चाम्बुचतुष्पदैः ।
पाषाणैः करभैः सिंहैः कुञ्जरैश्चित्रकैः श्वभिः ॥
विस्फोटैर्वृश्चिकैः सर्पैः कीटकैश्च मृताश्च ये ।
हत्यायुक्ता मृता ये च व्याघ्रैस्तु निहतास्तथा ॥
कण्ठपाशैर्मृता ये च ये च म्लेच्छैर्निपातिताः ।
आत्मघातकरा ये च कृमिभिस्तु मृता नराः ॥
चौरैस्तु निहता ये च विद्युत्पातेन ये मृताः ।
शृङ्गिभिर्निहता ये च ये च कारागृहे मृताः ॥
उत्पातेषु मृता ये च पश्चकेषु मृताश्च ये ।
गर्ह्यस्थानान्मृता ये च सर्वधर्मबहिष्कृताः ॥
नद्यां च पतिता ये च वाप्यां कूपतडागयोः ।
जलाशयेषु चान्येषु दुर्गाच्च पतिताश्च ये ॥
आश्रमात्पतिता ये च चण्डालाद्यैर्हताश्च ये ।
शय्यायां च मृता ये च शूद्रसंसर्ग एव च ॥

माधवीये ब्रह्मपुराणे—

नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ॥
परदारानुमन्तुश्च दोषात्तत्पतिभिर्हताः ।
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहतास्तांश्च चण्डालादीन् समाश्रिताः ।
शस्त्राग्निगरदाश्चैव पाखण्डाः क्रूरबुद्धयः ॥
क्रोधात्पापं विषं वह्निं शस्त्रमुद्बधबन्धनम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
कुशिल्पजीविनो ये च सूनालङ्कारधारिणः ।

भुखेभगास्तु ये जीवाः क्लीबप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये च येऽथवा ब्राह्मणर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥

पराशरोऽपि—

ब्रह्मदण्डाभियुक्तानां तेषां स्यान्नाग्निसंस्क्रिया ।
श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित् ॥

शङ्खोऽपि—

भृग्वग्न्यानाशकाम्भोभिर्मृतानामात्मघातिनाम् ।
न पिण्डं तस्य नाशौचं शस्त्रविद्युद्धताश्च ये ॥

आहिताग्नेरप्येवंविधमरणेऽग्न्यादीनां प्रतिपत्तिः

स्मृत्यन्तरे—

वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥

वृथामृतः अविहितमार्गेण मृतः । सचायं दाहादिक्रियानिषेधो बुद्धिपूर्वकमरणे ।

तदाह गौतमः—

"गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्चायुधिप्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्" इति । प्रायो महाप्रस्थानम् , अनाशकम् अनशनम् , प्रपतनम् भृगुपतनम् , एवैश्च बुद्धिपूर्वं मृतानाम् । तथा दर्पादिना चण्डालादिनिग्रहं कुर्वन्यस्तैर्हतस्तस्य, तथा दुष्टदंष्ट्रयादीन्ग्रहीतुमाभिमुख्येन गच्छतो राज्ञश्च प्रतिकूलमाचरतो बाहुभ्यां नदीं तरतश्च मरणे । एवं सर्वत्रानुसन्धेयम् । एवं व्याख्यामूलं च प्रागुदाहृतब्रह्मपुराणवचनमेवेति । एषामौर्ध्वदेहिकादिकर्तुः प्रायश्चित्तं मदनपारिजाते—

कृत्वाऽग्निमुदकं स्नानं स्पर्शनं वाहनं कथाम् ।
रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुद्ध्यति ॥

( मि० पृ० २९९ )

एतच्च बुद्धिपूर्वे । अबुद्धिपूर्वके तु संवर्तः—

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।
कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥

तथा पतितौर्ध्वदेहिकेऽपि प्रायश्चित्तं ब्रह्मपुराणे—

एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा ॥ इति ।

एवमात्मघातिप्रभृतीनां दाहादौ निषिद्धे तदौर्ध्वदेहिकं कथं कार्यमित्यपेक्षायां षट्त्रिंशन्मते—

गोब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं सम्वत्सरात् कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

अत्रापरं विशेषमाह पराशरः—

चण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो विशेषेणात्मघातकः ॥
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।
दग्ध्वाऽस्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः ॥
स्वेनाग्निना स्वमन्त्रेण पृथगेतत्पुनर्दहेत् ।

तदेतन्नारायणबलिं कृत्वा कार्यमिति वृद्धयाज्ञवल्क्यच्छागलेयावूचतुः—

नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥

तथा दिवोदासे—

पूर्णे सम्वत्सरे तेषामथ कार्या दयालुभिः ।
आषाढ्यैकादशीं शुक्लां नारायणबलिक्रिया ॥

आषाढ्यैकादशीं प्राप्येत्यर्थः ।

विष्णुदालभ्यसम्वादेऽपि पूर्वोक्तान् जलाग्नीत्याद्यपमृत्यूनभिधायोक्तम्—

एतेषां पापमृत्यूनां कुर्यान्नारायणक्रियाम् ।

व्यासोऽपि—

नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्न तदन्यथा ॥

तदयं निर्गलितोऽर्थः—सर्वेषामेव दुर्मृतानामविशेषेण दाहादौ निषिद्धे लौकिकाग्निना येन केनचिद्दाहयित्वाऽस्थीनि च क्षीरेण क्षालयित्वा क्वचित्पुण्यप्रदेशे निखाय सम्वत्सरानन्तरं श्राद्धे सम्प्रदानत्वयोग्यतार्थं नारायणबलिं कृत्वा वक्ष्यमाणं प्रायश्चित्तं च कृत्वा सर्वमौर्ध्वदेहिकं कार्यमिति ॥

तदाह त्रिकाण्डमण्डनः—

अस्थीनि यस्याविकृतानि सन्ति यावन्ति देहस्य परिस्फुटानि ।
मूर्द्धादिपादान्तशरीरक्लृप्तिं तैरेव कुर्यात्पुनरग्निदाहे ॥
क्षीरेण संक्षाल्य तथोदकेन गङ्गादितीर्थस्य सहस्रकुम्भैः ।
पञ्चामृतैः पञ्चगव्यैश्च युक्तैः स्नानं च कुर्युः पुरुषादिसूक्तैः ॥
एवंविधं चेत्कृतमस्ति कर्म स याति यस्यास्थि पदं च विष्णोः ।
छिन्नानि भिन्नानि परिस्फुटानि भस्मानि चाऽस्थीनि पुनः प्रयोगे ॥
यो वै समाहृत्य परेतकर्म कुर्वन्विपश्चिद्विपदं प्रयाति ।

भस्मानि भस्मीभूतानि । पुनःप्रयोगे पुनः संस्कारे । विपदं नरकमिति यावत् ।

कथं हि दाहे करणीयमस्य समित्सु पालाशतरूद्भवासु ।
कृत्वा स्वशाखोक्तशरीरक्लृप्तिं प्राणप्रतिष्ठां च विधाय पश्चात् ॥
कुर्यात्परेतस्य शरीरशुद्धिं ततो विदध्यात्पुनरग्निदाहम् ।
यथा कथञ्चिदस्थिनाशे पालाशीं तनुं कुर्यादित्यर्थः ॥

तदुक्तं ब्राह्मे—

सम्वत्सरान्ते पालाशपत्रवृन्तादिनिर्मितम् ।
तद्गात्रमग्नौ सन्दह्य शेषं कर्म समाचरेत् ॥ इति ।

तत्र दुर्मरणे प्रायश्चित्तमाह विश्वादर्शः—

'चण्डालाद्यैर्हतोवाऽप्यशुचिरपि मृतश्चान्द्र कृच्छ्रातिकृच्छ्रैः

शुद्धः सप्तान्त्यजैर्वा' इति ।

अस्यार्थः—चाण्डालोदकसर्पवैद्युतब्राह्मणैः सप्तान्त्यजैर्वा रजकचर्मकारनटबुरुडकैवर्त मेदभिल्लैर्हतः यश्च खट्वादौ वा अशुचिर्मृतः सहि पुत्रादिकृतचान्द्रकृच्छ्रातिकृच्छ्रैः शुद्धो भवतीत्यर्थः । धर्मप्रदीपेऽपि–चण्डालादुदकादित्युपक्रम्य नारायणबलिं कृत्वेत्यभिधाय—

तेषां पापविशुद्ध्यर्थं कृच्छ्रान् पञ्चदशाचरेत् ।

इत्युक्तम् । आश्वलायनगृह्यपरिशिष्टेऽपि चाण्डालादिहतानुपक्रम्य—

दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः।
प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चान्द्रायणत्रयम् ॥

इत्युक्तम् । स्मृत्यन्तरेऽपि—

चाण्डालादिहते विप्रे त्वन्तरिक्षे मृतेऽपि वा ।
कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शुद्धिस्तत्र प्रकीर्तिता ॥ इति ।

खट्वामरणे प्रायश्चित्तं धर्मप्रदीपे—

ऊर्ध्वोच्छिष्ट अधोच्छिष्ट खट्वादौ मरणे तथा ।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च ॥ इति ।

तथाऽन्तरिक्षमरणेऽपिप्रायश्चित्तं धर्मतत्त्वालोके—

ऊर्ध्वोच्छिष्टमधोच्छिष्टमन्तरिक्षे मृतिर्यदा ।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च ॥ इति ।

आत्मघातप्रायश्चित्तन्तु तत्तद्वर्णहननाविहितमेव । सामान्यतस्तु चान्द्रायणद्वयं तप्तकृच्छ्रचतुष्कं च । अथवा त्रिंशत्कृच्छ्राणीति स्मृतिसारः ।

तदुक्तं विष्णुदाल्भ्यसम्वादे—

प्रायश्चित्तं ततः कुर्याद् दृष्टं चान्द्रायणं तु वा ।
महान्ति चात्र दानानि धेन्वादीन्यष्ट दापयेत् ॥

यस्मिन्पापे यत्प्रायश्चित्तमुक्तं तद् दृष्टम्। अनुक्तप्रायश्चित्तेषु चान्द्रायणमिति। एव पतितानामपि मरणानन्तरं शरीरं गङ्गादिपुण्यनदीतोये सम्वत्सरं यावत्संस्थाप्य वर्षानन्तरं तत्तत्पापेषु विहितं सामान्यतोविहितं च प्रायश्चित्तं कृत्वा नारायणबलिं विधाय सर्वमौर्ध्वदेहिकं पुत्रादिः कुर्यादिति।

पतितशरीरं गङ्गादितोये संस्थाप्यमित्युक्तं—

मदने—

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया।
तेषामपि तथा गङ्गातोये संस्थापनं स्मृतम्॥ (मि०पृ०२९८)

गङ्गेति पुण्यनद्युपलक्षणम्। वर्षानन्तरं कार्यमित्युक्तं षट्त्रिंशन्मते—

गोब्राह्मणहतानां च पतितानां तथैव च।
ऊर्ध्वं सम्वत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम्॥ इति।

'नारायणबलिः कार्य' इत्युक्तं विष्णुदाल्भ्यसम्वादे। जलाग्नीत्याद्यपमृत्यूनुपक्रम्य—

हत्यायुक्ता मृता ये च व्याघ्रैस्तु निहतास्तथा।

इति मध्येऽभिधाय—

एतेषां पापमृत्यूनां कुर्यान्नारायणक्रियाम्।

इत्युपसंहारात्। हत्येति पातित्यहेतूपलक्षणम्। साधारणं प्रायश्चित्तं कृत्वा कार्यमित्युक्तं दिवोदासे शातातपेन—

पतिते च मृते शुद्धौ प्राजापत्यानि षोडश।
मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत्॥
एवं कृते विधाने तु प्रकुर्यादौर्ध्वदेहिकम्॥

इति। (निसि. पृ. १९२०)

एतदेव साधारणं प्रायश्चित्तं, पातित्यमात्रपुरस्कारेण प्रवृत्तत्वात्। असाधारणं तु तत्तत्पापेषु प्रतिपदोक्तमेव। तदत्रासाधारणेन साधारणं समुच्चीयत इति। तदेतत्सर्वमभिसन्धाय व्याति-

रेकमुखेनाह स्मृत्यर्थसारः—"ब्राह्मणादिहतानां पतितानां च प्रायश्चित्तकरणे" इति। सपिण्डीकरणं नास्तीत्यग्रेतनेन सम्बन्धः।

अत एव माधवीये ब्रह्मपुराणेऽपि—

क्रियते पतितानां तु गते सम्वत्सरे क्वचित्।
देशधर्मप्रमाणत्वाद्गयाकूपेषु बन्धुभिः॥
मार्तण्डपादमूले च श्राद्धे हरिहरं स्मरन्।

इति वर्षानन्तरं गयाश्राद्धं विहितम्।

नन्वेवं पतितानामपि श्राद्धादौ क्रियमाणे—

पतितानां न दाहःस्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डश्च कार्यं श्राद्धादिकं क्वचित्॥
एतानि पतितानां तु यः करोति विमोहितः।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा॥

इति ब्रह्मपुराणवचनविरोधः स्यादिति चेत्? मैवम्। तस्यान्यार्थपरत्वात्। तथाहि यस्त्वौद्धत्यादिना महापातकादिपतनीयप्रायश्चित्तान्यकुर्वन्—

दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्सदा।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह॥

इत्यादिमनुयाज्ञवल्क्योक्तविधिना पुत्रादिभिर्निरुदकीकृतस्तथा—"तस्य विद्यागुरुयोनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादिप्रेतकार्याणि कुर्युः" इत्यादिगौतमादिवाक्यविहितपुत्रादिकृतप्रेतकार्यश्चतस्य मरणे दाहान्त्येष्टिसञ्चयनाश्रुपातपिण्डदानश्राद्धानि पुत्रादिर्न कुर्यात्। यतो जीवतएव तस्मिन्नौर्द्ध्वदेहिकस्य कृतत्वात्पुनः करणम युक्तम्। अत एव तथाविधसम्भाषणादौ प्रायश्चित्तविधानमपीति युक्तमेवेदं सर्वम्। यस्तु पुनः प्रमादादिना महापातकादिपतनीयकर्माभिभूतस्तत्तत्पापेषु प्रायश्चित्तं चिकीर्षन्ननुतिष्ठन्वा मृतस्तस्य सम्वत्सरानन्तरं तत्तत्पापानुसारेण नारायणबलिपूर्वकं प्रायश्चित्तं कृत्वाऽस्थिपर्णशरयोर्यथासम्भवं दाहं

विधाय सर्वमौर्ध्वदेहिकं पुत्रादिः कुर्यादिति। तदेतत्सर्वं दिवोदासचन्द्रप्रकाशाभ्यां प्रमादात् म्लेछादित्वं गतस्य गयाकूपे पिण्डदानेन शुद्धिः स्यादिति माण्डव्यमतमुपन्यस्य तन्मते द्वादशाब्दिकप्रायश्चित्तपूर्वकं नारायणबलिना पर्णशरदाहं कृत्वौर्ध्वदेहिकं पुत्रादिः कुर्यादिति विवेचितम्। तथाऽग्रेपि पुनर्महापातकिनः प्रायश्चित्तमाचरतो मृतस्य दाहशौचादिकं सर्वं कर्तव्यम्।

पतितोऽपि च यः कुर्वन्विशुद्धिं मरणान्तिकम्।
तस्याशौचादि कर्तव्यं प्रेतकार्यं यथाविधि॥

इति स्मृतेरिति। मरणान्तिकं प्राप्त इत्यर्थ इति स्वयमेवाभिहितम्। एवं प्रायश्चित्तार्थमरणेऽपि।

तदाह गौतमः—"यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत्सर्वाण्येवैतस्मिन्नुदकादीनि प्रेतकार्याणि कुर्युः" इति। तथा राज्ञा पापविशेषे ताडनरूपे दण्डे क्रियमाणे मृतस्यापि। तथाच ब्रह्मपुराणम्—

राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥

अथवा पतितानां संवत्सरादूर्द्ध्वमौर्द्ध्वदेहिकविधानादर्वागौर्ध्वदेहिकनिषेधपरमिदं वचनजातमिति सिद्धं पतितस्यापि श्राद्धादिकमिति।

नन्वेवं—

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥

तथा—

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥

इत्यादिवाक्यैः पतिते पितरि पितामहस्यैव श्राद्धं विहितं, तद्यदि पतितस्यापि औदूर्ध्वदादिकं क्रियेत तर्हि तन्नोपपद्यते।

तमुल्लङ्घ्य पितामहश्राद्धादिकरणे कारणाभावादिति चेत् ? सत्यम् , तद्यदि यथाश्रुतमेव गृह्येत तदाऽनेकवचनविरोधःस्यात् । तथाहि—ब्राह्मणादिहते पतिते च पितरि पितामहस्यैव श्राद्धं कार्यं न पितुरित्युच्यमाने—

ब्राह्मणादिहतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

इति वाक्येनौर्ध्वदेहिकादिविधानं नोपपद्येत । किञ्च पतिते पितरि—

माता म्लेच्छत्वमापन्ना पिता वाऽपि कथञ्चन ।

इत्युपक्रम्य—

पितरं विष्णुमुच्चार्य तदूर्ध्वं च पितामहम् ।

इत्यादिप्रथमस्तबकोदाहृतदेवलवचनेन तन्नामोच्चारणस्थाने विष्णुनामोच्चारणमात्रविधानादस्त्येव तस्यापि श्राद्धमिति यदुच्यते तदसङ्गतं स्यात् । तथा संन्यस्तेत्यप्यसङ्गतं स्यात् ।

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।

इत्यादिवचनविरोधात् । तथैव व्युत्क्रममृतेत्यपि, "यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्" इति विष्णुवचनविरोधात् । एतेन जीवति मृते चैतत्समानमेवेति मूर्खप्रलापितमपास्तम् ।

तस्मादेतदेवं व्याख्येयम्—ब्राह्मणादिहते पितरि संवत्सरानन्तरमौर्ध्वदेहिकविधानादन्तरा पितामहश्राद्धस्य तावत्कालं लोपप्रसङ्गात्पौत्रेण तदधिकारप्राप्तं स्वयं कर्तव्यमेवेत्यनेनोपदिश्यते । अन्यथा पूर्वोक्तानेकवचनविरोधःस्यात् । विकल्पस्य चाष्टदोषदुष्टत्वात् । तथा पतिते संन्यस्ते च जीवति तदधिकारप्राप्तं कार्यं, मृते तु तस्यापि । व्युत्क्रममृत इतित्वेवं व्याख्येयम्—पितामहे जीवति पितरि च मृते प्रपितामहाय दद्यात् 'येभ्य एव पिता दद्यात्'

इतिवचनेन मृतस्य पितुर्जीवत्पितृकत्वेन प्रपितामहस्यैव देवदत्त-पितृकर्तृकश्राद्धे देवत्वात् । तेन येभ्य एवेत्यवैरूप्येण घटते । अन्ये तु पितृशब्दः क्वचित्स्वपितृपरः क्वचिच्च पितृपरइत्याहुः । तन्न, वैरूप्यादेवेति । तदत्र—

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।

इति वचनविहितसपिण्डीकरणाकरणपक्षमभिप्रेत्य प्रपितामह-श्राद्धविधानमिति सर्वमनवद्यम् । एवं ब्राह्मणादिहतस्य संन्यस्तस्य व्युत्क्रममृतस्य च श्राद्धाद्यङ्गीकुर्वतां पतितमात्रस्यैव श्राद्धं प्रद्विषतां पूर्वोदाहृतवचननिचयविरोधश्चापहरतां कीदृशोऽयं धर्मशास्त्रज्ञाना-भिमान इति न विद्मः । तस्मात्संवत्सरान्ते सर्वेषामौर्ध्वदेहिकं का-र्यमितिसिद्धम् । स्मृतिसारे संवत्सरादर्वागपि तत्तत्पापानुसारेण द्विगुणादिकं प्रायश्चित्तं विधाय नारायणबलिं च कृत्वौर्ध्वदेहिकं कार्यम्, आयुषः अनित्यत्वेन संवत्सरानन्तरमौर्ध्वदेहिकलोपप्र-सङ्गादित्युक्तम् । अभ्युपगतश्चैतन्मदनेनापि । संवत्सरादर्वाक्करणपक्षे विशेषश्च विष्णुदाल्भ्यसंवादे—

षष्ठे मासि द्विजातेश्च तृतीये क्षत्रियस्य च ।
मासान्ते चैव वैश्यस्य सद्यः स्त्रीशूद्रयोर्मता ॥
मासान्ते वाऽपि सर्वेषां कुर्यान्नारायणक्रियाम् । इति ।

अथ यः प्रमादात्पूर्वोक्तनिमित्तैर्विपद्यते विद्यत एव तस्य क्रि-यादिकमित्याहाऽङ्गिराः—

अथ कश्चित्प्रमादेन म्रियेताऽप्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥

सुमन्तुरपि—"भृग्वग्निजलसङ्ग्रामदेशान्तरस्थसंन्यासानशन-महाध्वनिकानामुदकक्रिया कार्या सद्यः शौचं भवति" इति । मा-धवीये ब्रह्मपुराणेऽपि—

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः ।

शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥
चण्डालैरथवा चौरैर्निहतो यत्र कुत्रचित् ।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥ इति ।

अथ ये विहितोपायेन मृतास्तेषां दाहाशौचाद्यभावो नारायणबलिर्वा नास्ति, किन्तु यथोपादिष्टमेव । तथाचादिपुराणे—

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि ।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा ॥
अगाधतोयराशिं वा भृगोः पतनमेव च ।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ॥
प्रयागवटशाखायां देहत्यागं करोति वा ।
स्वयं देहविनाशस्य प्राप्ते काले महामतिः ॥
उत्तमान् प्राप्नुयाल्लोकानात्मघाती भवेत्क्वचित् ।
महापापक्षयात्स्वर्गे दिव्यान्भोगानवाप्नुयात् ॥
एतेषामधिकारस्तु सर्वेषां सर्वजन्तुषु ।
नराणामथ नारीणां सर्वकालेषु सर्वदा ।
ईदृशं मृतकं येषां जीवानां कुत्रचिद्भवेत् ।
आशौचं स्यात् त्र्यहं तेषां वज्रानलहतेषु च ॥
वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः ॥
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः ।
प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित् ॥

विवस्वान्—

सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च ।
प्रायश्चित्तमनुज्ञातमग्निपातो महापथः ॥
धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च ।
ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ॥

इच्छन्ति जीवितं देवा धर्मार्थं तु द्विजातिषु ।
अधर्मजीविनस्तीर्थे देहत्यागो विधीयते ॥

धर्मार्जनासमर्थस्य द्वादशवार्षिकादिप्रायश्चित्तासमर्थस्येति मदनः । ब्रह्मगर्भः—

योऽनुष्ठातुमशक्तोऽपि मोहाद्व्याध्युपपीडितः ।
सोऽग्निवारिमहायात्रां कुर्वन्नोऽमुत्र दुष्यति ॥
सर्वेन्द्रियविरक्तस्य वृद्धस्य मृतकर्मणः ।
व्याधितस्य स्मृतं तीर्थे मरणं तपसोऽधिकम् ॥

वृद्धगार्ग्यः—

महाप्रस्थानगमनं ज्वलनाम्बुप्रवेशनम् ।
भृगुप्रपतनं चैव वृथा नेच्छेत्तु जीवितम् ॥

एतल्लुप्तचेष्टानां गृहस्थावस्थायामपीति हलाहरः ।

मनुशातातपौ—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥

वसिष्ठोऽपि फलमुखेनाह—

भृगुप्रपतनाद्राज्यं नाकपृष्ठमनाशकात् । इति ॥

व्यासोऽपि—

जले सप्त सहस्राणि चतुर्दश हुताशने ।
अनाशकस्य राजेन्द्र फले संख्या न विद्यते ॥

तथा ब्रह्मपुराणेऽपि—

अपराजितामास्थाय व्रजेद्दिशमजिह्मगः ।
आनिपाताच्छरीरस्य युक्तो वार्यनिलाशनः ॥
आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् ।
वीतशोकभयो विप्रो ब्रह्मभूयाय कल्पते ॥

महाभारते—

समाः सहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ।
महाहवे षष्टिरशीतिगोग्रहे अनाशने भरत चाक्षया गतिः ॥

अनशनविधिना मरणं भरणं त्रिभजनस्य च ।
मुक्तेः करणं त्रिविधं स्मरणं हरिहरचरणयुगलस्य ॥

अथ विहितमरणप्रसङ्गादन्वारोहणं निरूप्यते ।

तत्र हारीतः—

मृते भर्तरि या नारी समारोहेद् हुताशनम् ।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
मातृकं पैतृकं चाऽपि यत्र चैवं प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं वाऽनुगच्छति ॥

शङ्खाङ्गिरसावपि—

तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
तद्वदुद्धृत्य सा नारी सह तेनैव मोदते ॥
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥

तथा—

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥

तथा—

आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥
यावच्चाग्रे मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ।
बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति ।
व्रतोपवासनिरता रक्षेद्गर्भं च गर्भिणी ॥ इति ।

स्मृत्यर्थसारेऽपि——तच्चान्वारोहणं गर्भिण्या निषिद्धम् । ब्राह्मणगर्भिण्या ब्रह्महत्यासमम् , क्षत्रियादिगर्भिण्याः क्षत्रियादिवध एवेति । अथ कथंचिदन्वारूढा ब्रह्मचर्येण वा तिष्ठेदित्युक्तं विष्णुना—भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं चेति । कामाकामाभ्यां व्यवस्थितो विकल्प इत्यपरार्कः । अन्वारोहणे तु महानभ्युदय इति मिताक्षरा । अन्ये तु तपस एव मुख्यत्वं, विष्णुना प्रथमोपादानादित्याहुः । वस्तुतस्तु—

यावच्चाग्ने मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ।
तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन ॥

इत्यादिवचनादन्वारोहणस्यैव मुख्यत्वं प्रतिभाति ॥

## अथ रजस्वलाया अपि सहगमविधिः ।

तत्र स्मृतिरहस्यवाक्यानि—

यदा स्त्रियामुदक्यायां पतिः प्राणान्परित्यजेत् ।
द्रोणमेकं तण्डुलानामवहन्याद्विशुद्धये ॥

द्रोणप्रमाणं तु—

पलद्वयं तु प्रसृतिर्द्विगुणं कुडवं स्मृतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
चतुर्भिराढकैर्द्रोण एतद्द्रोणस्य लक्षणम् ।
मुसलाभिघातैस्तदसृक् स्रवते योनिमण्डलात् ॥
विरजस्का मन्यमाना स्वे चित्ते तदसृक्क्षयम् ।
दृष्ट्वाशौचं प्रकुर्वीत पञ्चमृत्तिकया पृथक् ॥
त्रिंशद्विंशद्दशपञ्च गवां दत्त्वा त्वहःक्रमात् ।
विप्राणां वचनं लब्ध्वा समारोहेद्धुताशनम् ॥
नारीणां सरजस्कानामियं शुद्धिरुदाहृता ॥ इति ।

रजस्वलाऽप्येतदुक्तप्रायश्चित्तेन शुद्धा सती तदैव समारोहणं कुर्यात् । स्वर्गसोपानपद्धतौ तु विशेषः प्रयोगरूपेणाभिहितः ।

कात्यायन्या शुद्धा स्त्री अष्टोत्तरशतवारं स्नात्वा तां पुनः पुनः स्पृशेत्। ततः सा तिलतैलेन सार्षपेण वाऽभ्यङ्गं विधाय पिण्याकेन शिरोऽङ्गानि च प्रक्षाल्य स्नात्वाऽऽचम्य बहिर्निर्गत्य वासोऽन्तरं परिधायान्येभ्यस्तद्वस्त्रं दद्यात्। ततः पञ्चगव्यं प्राश्य विष्णुचरणोदकेन स्नायात्। ब्राह्मणाय गामेकां दद्यात्। यथाशक्ति ब्राह्मणेभ्यो दक्षिणाश्चेति।

तत्रैव प्रकारान्तरमप्यभिहितम्। अथवा अष्टोत्तरशतैर्जलपूर्णैर्घटैः संस्थापितैः प्रज्वालितवह्निसन्निधाने रजस्वलामेकेन घटोदकेन स्नापयेत्। ततोऽग्निसमीपे स्थित्वा यावत्स्वेदो भवति तावदग्निं तापयेत्। पुनरेकेन घटेन स्नापयेत्। एवमष्टोत्तरशतैरपि घटैरित्यपि ग्रन्थान्तरात्—इति। अथवा चतुर्थेऽहनि रजोनिवृत्तौ स्नाता शिष्टाचाराविरुद्धमार्गेण कुर्यात्। तथा च स्मृतिरहस्ये बृहद्यमः—

हुताशं या समारूढा चतुर्थेऽह्नि पतिव्रता।
तस्या भर्तुर्दिनात्कार्यं वृषोत्सर्गादि सूतकम्॥ इति।

दिवोदासस्तु—यदि ब्राह्मणी रजस्वला भर्त्रा सह मुमूर्षुस्तदा रजोदर्शनदिनात्पञ्चमेऽहनि स्नाता पतिदाहाग्न्यस्थिमतीं चितिं प्रविशेत्, क्षत्रियादिस्तु कालान्तरेऽप्यनुगच्छेदित्याह। चतुर्थदिनेऽपि प्रकारोऽयमेवेति।

### अथ चितिभ्रष्टायाः प्रायश्चित्तम्।

तत्रापस्तम्बः—

चितिदग्धा तु या नारी मोहाद्विचलिता भवेत्।
प्राजापत्येन शुद्ध्येत तस्माद्वै पापकर्मणः॥

दिवोदासे विशेषः—

चितिभ्रष्टा तु या नारी मोहाद्विचलिता यदि।
प्राजापत्यं चरेत्कृच्छ्रं पुनश्चाग्निं विशेन्नचेत्॥
तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन॥ इति।

अङ्गिराः—

साध्वीनामेव नारीणामग्निप्रपतनादृते।
नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित्॥

स्कान्देऽपि—

कन्यां विवाहसमये वाचयेयुरिति द्विजाः।
भर्तुः सहचरी भूयाज्जीवतोऽजीवतोपि वा॥
अनुव्रजन्ती भर्तारं गृहात्पितृवनं मुदा।
पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यनुत्तमम्॥
यमदूताः पलायन्ते सतीमालोक्य दूरतः।
तपनस्तप्यतेऽत्यर्थं दहनोऽपि न दह्यते॥
कम्पन्ते सर्वतेजांसि दृष्ट्वा पातिव्रतं महः।

इत्यादिस्मृतिपुराणवचनेष्वन्वारोहणं श्रूयते। तच्चारोहणं द्विविधम्—सहगमनमनुगमनं चेति। सहगमनं च भर्तृशरीरेण तदस्थिभिर्वा तत्प्रतिनिधिभूतपर्णशरेण वा सह एकचित्यारोहणम्। भर्तृशरीरादिसाहित्यव्यतिरेकेण केवलं भर्तृमात्रोद्देशेन भिन्नचित्यारोहणमनुगमनम्। तत्र च ब्राह्मण्याः सहगमन एवाधिकारः—

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति।
अन्यासामेव नारीणां धर्मोऽयं परमः स्मृतः॥

इत्युशनसःस्मरणात्। यानि तु—

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।
इतरेषु तु वर्णेषु तपः परममुच्यते॥
जीवती तद्व्रतं कुर्यान्मरणादात्मघातिनी।
या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्॥
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्॥

इत्यादीनिवाक्यानि, तान्यपि पृथक्चितिविषयाण्येव, पूर्ववाक्यानुरोधात्। तेन ब्राह्मण्या एकचित्यारोहणमेव न पृथक्चित्या-

रोहणं कार्यम् । तदेतत्स्पष्टमाचष्ट स्मृत्यर्थसारः—ब्राह्मण्या एक-चित्यारोहणमेव न पृथक्चित्यारोहणं कार्यम् । सवर्णायाः पत्या सहैकचित्यारोहणमसवर्णायाः पृथक् चित्यारोहणमेव इति । अतः क्षत्रियादिस्त्रीणां पृथगपृथग्वेत्यनियतमिति मिताक्षरास्वरसः ॥

अथ सहगमनेति कर्तव्यता स्मृत्यर्थसारे—अन्वारोहणं करिष्यामीतिसङ्कल्प्य पतिन्नमस्कृत्य चितिमारुह्य सर्वप्रयोगं कारयेत् । यद्वा सङ्कल्प्य प्रयोगे कृते दह्यमाने भर्तरि तं नत्वाऽग्निं प्रविशेदिति ।

अथ देशान्तरमृते पत्यौ तच्छरीरालाभे तदस्थिभिः पर्णशरेण वा सहगमनमस्तीत्युक्तं दिवोदासे भरद्वाजेन—

पृथक्चितिं मृते पत्यौ न विप्रा गन्तुमर्हति ।
साऽप्यनुम्रियते पर्णशरदाहे तथाऽस्थिभिः ॥ इति ।

भर्तृशरीरालाभे तदस्थिभिः सह तत्संस्कारार्थं क्रियमाणेन कुशपुत्रकेण वा सहाग्निं कालान्तरेऽपि ब्राह्मणी प्रविशेद्यदि भर्तृशरीरं पृथक्चितिसंस्कृतं न स्यादिति । अभ्युपगतं चैतत्पारिजातेनापि—'देशान्तरमृते पत्यौ ब्राह्मण्यास्तदस्थिभिस्सह गमनं भवत्येव' इति । तेनास्थिपर्णशराद्यभावे न विप्रा गन्तुमर्हति इति पूर्वार्द्धार्थो युक्त एव । इतरासां तु अस्थ्याद्यभावेऽपि पादुकादिभर्तृचिह्नेनापि सह भवतीत्युक्तं पारिजातेन । तन्मूलं तु दिवोदासेन ब्रह्मपुराणमाविष्कृतम्—

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥ इति ।

एवञ्च स्नेहसम्बन्धिनीनां भृत्यानां च पृथक्चितिमृतिरेव,

जारेण सह या काचिदनुयाति हुताशनम् ।
न साऽऽत्मानं न भर्तारं तारयेत्पापभागिह सा ॥

इति दिवोदासे स्मृत्यन्तरे निषेधात् । स चायं 'स्त्रीणामगर्भिणीनामबालापत्यानामाचाण्डालं साधारणो धर्म' इति मिता-

श्वरा । तन्मूलं च दिवोदासे स्मृत्यन्तरम्—

## अथ संघातमृते विशेषः ।

स्मृत्यर्थसारे—

स्त्रीपुरुषमरण एकस्मिन्दहनकाले प्राप्ते सवर्णानां समानधर्माणां पत्न्या सह दहनं कृत्वा उदकपिण्डादिकं पतिपूर्वं कृत्वा पश्चात्सापिण्ड्य कार्यम् । असवर्णानां समानधर्माणां पत्नीनां सह दहनम्, उदकपिण्डादिकं च ज्येष्ठपूर्वं पृथगेव, पितापुत्रयोः समानधर्मयोः कपालाग्निना दाह्ययोर्दाहः सहैव कार्यः, उदकादिकं पितृपूर्वं पृथगेवेति । भ्रातॄणामसवर्णानां समानधर्माणां कपालाग्निना दाह्यानां पृथक् सह वा दाहः, उदकादिकं ज्येष्ठपूर्वं पृथगेवेति ॥

## अथ त्रिदण्डिसंस्कारः ।

तत्र बौधायनः—

कर्मनिष्ठे तु संन्यस्ते पितर्युपरते सुतः ।
दहनं तस्य कर्त्तव्यं यच्चान्यच्छेषसंज्ञितम् ॥

शुद्धिगूढे बौधायनः—

अथ परिव्राजकस्य संस्कारविधिं व्याख्यास्यामः—अनाहिताग्निवत्सर्वमस्य कुर्यात्संस्कारवैगुण्ये पुनः शरीरग्रहणं प्राप्नोत्यतः स्वस्थावस्थो भिक्षुः पूर्वं प्रतिपादयेच्छिष्येभ्योऽन्यस्मैवा, ते संस्कारं कुर्युः, शिरःप्रमाणं गर्तं खनेत् । प्रणवेन प्रोक्ष्येन्धनप्रक्षेपः कुशैः परिस्तरणं चतुष्कैः कुशोदकेन शवं स्नपयेत्, प्रणवेन शवं गर्ते स्थापयेत् । मित्रस्य त्वा चक्षुषेति प्रतीक्ष्य शवं प्राक्शिरसं स्थापयेत् । विष्णोर्विक्रमणमसीति गर्ताच्छवनिःक्रमणं प्रणवेनेन्धनप्रक्षेपणं त्रीणि पदा विचक्रम इति पदत्रयं नीत्वा तद्विष्णोः परमं पदम् इति, पश्येत् । विष्णोः स्थानमसीति संस्कारस्थानेन्यस्य सखा मा गोपायेति त्रिदण्डं दक्षिणहस्ते सादयति येन देवाः पवित्रेण इति जलपवित्रं मुखे यदस्य

पारेरजस इति शिक्यं वामकरे सप्तव्याहृतिभिर्भिक्षाभाजनमुदरे इदं विष्णुरित्यासनं कव्यामथेन्धनान्युरसि निक्षिप्य प्रणवेन प्रज्वालयेत्। रसातले मृत्तिकां प्रक्षिप्य निखनेत् प्रणवेनापो गृहीत्वा वैश्वानरं प्रदक्षिणीकृत्यापोऽग्नौ प्रणवेन क्षिपेत्। निःशेषं दग्ध्वा प्रणवेनाग्निमार्जनं कृत्वा त्र्यहेणैकाहेन वाऽस्थिमार्जनं चतुष्केण कृत्वा प्रणवेनोदके प्रवाहयेत् इति। चतुष्कं नाम प्रणवव्याहृतिगायत्रीशिरोमन्त्रसमूहः। एवं यथोक्तसंस्कारकरणे फलमुदाहरन्ति—

गवां शतसहस्रस्य सम्यक् दत्तस्य यत्फलम्।
तत्फलं लभते चान्ते विष्णोश्च स्मरणं भवेत्॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
ततोऽधिकं लभेद्विद्वान् यः करोति क्रियामिमाम्॥इति।

अत्रच व्यवस्थोक्ता चन्द्रप्रकाशे—

प्राक् साग्निकानां भिक्षूणां निदध्याद्वा जले क्षितौ।
निरग्नीनां दहेद्विप्रः प्रमीतानां कलेवरम्॥

अन्यदपि—

कुटीरकं सन्दहेत्तु पूरयेच्च बहूदकम्।
हंसं जलेषु निक्षिप्य परमहंसं प्रपूरयेत्॥

इति त्रिदण्डिसंस्कारविधिः।

## अथ ब्रह्मचारिसंस्कारः।

विधानमालायाम्—

येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि।
तत्कुलं क्षयमाप्नोति सोऽपि दुर्गतिमाप्नुयात्॥
ग्रहत्वं प्राप्नुयाद्बोधिद्रुमेऽनवरतं वसेत्।
तस्य तस्य च वंशस्य गतिमिच्छन्महीयसीम्॥
विधानं च विधायाशु और्ध्वदेहिकमाचरेत्।
मृतस्य म्रियमाणस्य षडब्दव्रतमादिशेत्॥

त्रिंशद्भ्यो ब्रह्मचारिभ्यो दद्यात्कौपनिकाम्बरान् ।
हस्तमात्राः कर्णमात्रा दद्यात्कृष्णाजिनानि च ॥
पादुकाछत्रमाल्यानि गोपीचन्दनमेव च ।
मणिप्रवालमालाश्च ब्रह्मसूत्राणि चार्पयेत् ॥
मन्त्रैस्तत्तल्लिङ्गकैश्च ब्रह्मसायुज्यसिद्धये ।
अभावे व्रतिनां पूज्या गृहस्थाः साधवः शुभाः ॥
एवं कृते विधाने च विघ्नस्तस्य न जायते ।

ब्रह्मचारिणोऽर्कादिविवाहं कृत्वा दाहादिकं कार्यमित्याह शौनकः—

ब्रह्मचारिमृतौ रीतिं कथयामि समासतः ।
तत्रावकीर्णदोषस्य प्रायश्चित्तं प्रशान्तये ॥
द्वादशाब्दं षडब्दं वा त्र्यब्दं शक्त्याऽथवा चरेत् ।
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि ॥
संयोज्य चार्कविधिना दग्धव्यौ तौ ततः परम् ।
कृत्वाऽग्निस्थापनं तत्र आघारान्तं विधाय च ॥
ततो व्याहृतिभिर्होमो ह्यग्निर्व्रतपतिस्तथा ।
अग्नये व्रतानुष्ठानफलसम्पादनाय च ॥
विश्वेभ्यश्चैव देवेभ्यस्ततः स्विष्टकृतादिकम् ।
एवं व्रतं विसृज्याथ नत्वार्कसविधे पुनः ॥
शाखां वाऽऽहृत्य रजनीचूर्णेन विनिलेपयेत् ।
वस्त्रयुग्मेन संवेष्ट्य पीतवस्त्रादिभिस्तथा ॥
पुनरग्निं प्रतिष्ठाप्य आघारान्तं विधाय च ।
अग्निर्बृहस्पतिश्चैव विवाहविधियोजकः ॥
यस्मै त्वमिति मन्त्रेण कामाय जुहुयात्ततः ।
ततोऽन्ते च व्याहृतयस्ततः स्विष्टकृदादिकम् ॥
एवं विधाय तां शाखां शवेन सह दाहयेत् ॥ इति ।

## अथ कुष्ठिसंस्कारः ।

तत्र यमः—

मृतस्य कुष्ठिनो देहं निखनेद्गोष्ठभूमिषु ।
वासरत्रितयं पश्चादुद्धृत्यान्यत्र तद्दहेत् ॥
न गङ्गाप्लवनं कार्यं न निक्षेपो विधीयते ।
षडब्दव्रतचर्यां च विधायान्त्यक्रतुं चरेत् ॥
ततः सञ्चयनं तस्य गङ्गायां प्रक्षिपेत्सुधीः ।
मासि मासि ततः कुर्यान्मासिश्राद्धानि पार्वणात् ॥
सङ्कल्पविधिना केचित्प्रवदन्ति मनीषिणः ।
इत्येतत्कुष्ठिनामन्त्यं कथितं कर्मकोविदैः ॥
स्मृतिविद्भिरनूचानैर्यमाद्यैः पूतविग्रहैः ।

## अथ गर्भिणीसंस्कारः ।

तत्र बौधायनः—"अथ गर्भिणीम्रियेतात ऊर्द्ध्वं क्रियां विदधीत श्मशानं नीत्वा जलवत्तदेत्योद्यं पश्चात्तिष्ठन् प्रेतायाः सव्यपार्श्वे "हिरण्यगर्भः समवर्तताग्रे" इति सुवर्णमन्तर्धायावलिखेत् कुमारं दृष्टमनुमन्त्रयीत जीव मम पुत्र इति इमं बालं स्थापयेत्प्रेतोदरे हिरण्यमन्तर्धाय 'यस्ते स्तनः शश इति बालस्यानुमुखं स्तनं निधाय श्मशानमागत्य प्रेतहृदयं पञ्चभिर्होमः कार्यः ।

तत्र मन्त्राः—

प्रदाय स्वाहा सर्वप्राणापानव्यानोदानसमानं चक्षुः श्रोत्रं मनः सरस्वतीत्येतैश्चतुर्थ्यन्तैर्मृतं शिशुमुदरे निक्षिप्याव्रणमुदरं कृत्वा प्रेतं चितामारोप्य यथोक्तेन दहेत् । तद्दिवसे भूम्यादि दद्यादिति । प्रयोगसारे—

गर्भिण्यां तु मृतायां वै गर्भजीवनशङ्कया ।
विमोच्य गर्भं दग्धव्या ह्येवं धर्मो न हीयते ॥
गर्भिण्योद्दक्यसंस्कारं शिशुसंस्कारमेव च ।

गर्भिण्या मरणे प्राप्ते पञ्चगव्यैर्जलैः सह ॥
आपोहिष्ठादिभिर्लिङ्गैः प्रोक्ष्य कर्ता समाहितः ।
प्रेतं श्मशाने नीत्वाऽथ उल्लिखेत्सव्यभागकम् ॥
पुत्रमादाय जीवंश्चेत्स्तनं दत्त्वाऽन्यथा ततः ।
यस्ते स्तन इत्यनया व्याहृत्या गृहमानयेत् ॥
उदरं चाव्रणं कृत्वा पृषदाज्येन पूरयेत् ।
मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥
स्नात्वाऽऽच्छाद्यान्यवस्त्रेण पितृमेधेन दाहयेत् ।
संस्थिते सति पुत्रेण व्याहृत्या चानयेत् गृहम् ॥
शिशोस्तु मरणे प्राप्ते तत्रैव निखनेद्भुवि ॥ इति ।

स्वर्गसोपानपद्धतौ—

यदा गर्भवती नारी सशल्या संस्थिता भवेत् ।
कुक्षिं भित्वा ततः शल्यं निर्हरेद्यदि जीवति ॥
प्रमीतं निक्षिपेत्तं तु प्रायश्चित्तं ततः परम् ।
सा त्रयस्त्रिंशता कृच्छ्रैः शुद्ध्यते शल्यदोषतः ॥
सगर्भदहने तस्या वर्णजं वधपातकम् ।
प्रायश्चित्तं चरित्वा तु शुद्ध्यन्ते पापकारिणः ॥
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् । इति ॥

दिवोदासप्रकाशेऽपि—

गर्भिण्यां तु मृतायां वै गर्भजीवनशङ्कया ।
विमोच्य गर्भं दग्धव्या ह्येवं धर्मो न हीयते ॥

## अथ सूतिकासंस्कारः ।

तत्र सङ्ग्रहकारः—

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।

तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥

प्रेतमञ्जर्यामपि—

सूतिकामरणे प्राप्ते सर्वौषध्यनुलेपनम् ।
अमूतकी तु संस्पृष्टः सूर्पाणां तु शतं क्षिपेत् ॥

धर्मप्रदीपेऽपि—

सूतिका स्त्री मृता यत्र प्रायश्चित्तं कथं भवेत् ।
पञ्चगव्यं न्यसेत्तस्य शुद्धोदकलशेष्वपि ॥
कारयेयुः स्त्रियः स्नानमुदक्यायास्तथैव च ।
तस्याः पापविशुद्ध्यर्थं कृच्छ्राणां पञ्चदशाचरेत् ॥

अथ सूतिकामरणे दिनविशेषेण प्रायश्चित्तविशेषः ।

स्मृतिसङ्ग्रहे तत्रादौ प्रथमत्र्यहे—

सूतिका तु यदा साध्वी विस्नाना मरणं गता ।
त्रिवर्षपूर्णपर्यन्तं शुद्ध्येत्कृच्छ्रेण सर्वदा ॥

अथ द्वितीयत्र्यहे—

सूतिका तु यदा नारी रजसा च परिप्लुता ।
म्रियते चेत्तदा सा तु द्विवर्षं कृच्छ्रमाचरेत् ॥

अथान्त्यत्रिके—

सूतिका तु यदा साध्वी विस्नाना मरणं गता ।
अब्दकृच्छ्रेण शुद्ध्येत व्यासस्य वचनं यथा ॥

अत्राशक्तस्य पक्षान्तरमाह स एव—

सूतिका तु यदा साध्वी विस्नाना मरणं गता ।
त्रिषष्ठ्यदिनादर्वागेकाब्देन विशुद्ध्यति ॥

दशाहोत्तरमासाभ्यन्तरमरणे तु विशेषमाह स एव—

सूतिका तु यदा नारी प्राणांश्चैव परित्यजेत् ।
मासमेकावधिर्यावत्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥

अत्र च पुत्रादिर्यथोक्तं प्रायश्चित्तं गोदानादि प्रत्याम्नायेन त-

त्कालमेव कृत्वा दाहादिकं कुर्यादिति सर्ववाक्यानामर्थः, शुद्ध्यर्थत्वात्तस्य। तत्कालाकरणे च शुद्ध्यनुत्पादादिति प्राञ्चः।

## अथ रजस्वलासंस्कारः।

सङ्ग्रहे—

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम्।
वस्त्रान्तरवृतां कृत्वा दाहयेद्विधिपूर्वकम्॥

प्रेतमञ्जर्यामपि—

उदक्या सूतिका वाऽपि मृतास्याद्यदि तां तदा।
आशौचे त्वनतिक्रान्ते दाहयेदन्तरा यदि॥
उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्रतः।
आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः॥
पवमानानुवाकेन यदन्तीति च सप्तभिः।
ततो यज्ञपवित्रेण गोमूत्रेणाथवा द्विजः।
स्थापयित्वाऽन्यवसनेनाच्छाद्य शवधर्मतः॥
दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा॥

'पवमानः सुवर्चनः' इति पवमानानुवाकः। 'यदन्ति यच्च दूरकम्' इति सप्त ऋचः। यज्ञपवित्रम् 'आपो अस्मान्' इति। इत्यादिमन्त्रैः पूर्वोक्तद्रव्यैश्च प्रेतां रजस्वलां संस्नाप्य त्रिरात्रमध्येऽपि दाहः कार्यः। अत्र च प्रायश्चित्तमुक्तं बौधायनेन—

अन्तरिक्षे मृता ये च वन्हौ वाऽथ जलेऽपि वा।
उदक्या सूतिका चैव चरेच्चान्द्रायणत्रयम्॥ इति।

अत्र च उदक्या चरेदित्यस्योदक्यापुत्रादिर्यथोक्तं प्रायश्चित्तं गवादिप्रत्याम्नायेन कृत्वौर्ध्वदेहिकं कुर्यादित्यर्थः।

धर्मप्रदीपेऽपि सूतिकाशुद्धिमभिधायोक्तम्—

कारयेयुः स्त्रियाः स्नानमुदक्यायास्तथैव च।
तस्याः पापविशुद्ध्यर्थं कृच्छ्रान्पञ्चदशाचरेत्॥ इति।

प्रयोगसारेऽपि—

उदक्यामरणे प्राप्ते पञ्चगव्येन यत्नतः ।
संस्नाप्य ब्राह्मणैर्दर्भैरापोहिष्ठादिभिस्त्रिभिः ॥
चतुर्दशातिकृच्छ्राणि चरित्वा शुद्धिमाप्नुयात् । इति ॥

इदं त्वापद्विषयम् । वस्तुतस्तु त्रिरात्रानन्तरमेव संस्कारमाह वृद्धशातातपः—

रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् ।
ऊर्ध्वं त्रिरात्रात्स्नातायाः शवधर्मेण दाहयेत् ॥ इति ।

तथा प्रेत मञ्जर्यामपि—

रजस्वलायां प्रेतायां न संस्कारोदकक्रियाः ।
स्थापयित्वा त्रिरात्रं तु शवधर्मेण दाहयेत् ॥

यावता त्रिरात्रपूर्त्तिर्भवतीत्यर्थः ।

## अथ पञ्चकमृतसंस्कारः ।

दिवोदासे गरुडपुराणे—

आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ।
रेवत्यन्तं सदा दूष्यमशुभं सर्वदा भवेत् ॥
दाहस्तत्र न कर्तव्यो विषादः सर्वजातिषु ।
न जलं दीयते तस्य ह्यशुभं सर्वदा भवेत् ॥
पञ्चकानन्तरं कार्यं कर्तव्यं सर्वमन्यथा ।
पुत्राणां गोत्रिणां तस्य संतापो ह्युपजायते ॥
गृहे हानिर्भवेत्पृष्ठे ऋक्षेष्वेषु मृतस्तु यः ।
ऋक्षाणामथ नो मध्ये दाहस्तु विधिपूर्वकः ॥
क्रियते मानुषाणां तु सद्यआहुतिकारणात् ।
विप्रैर्नियमतः कार्यो मन्त्रैस्तु विधिपूर्वकः ॥
शवस्य तु समीपे तु क्षेप्तव्याः पुत्तलास्ततः ।
दर्भमयाश्चत्वारः ऋक्षमन्त्राभिमन्त्रिता ॥

ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह ।
सूतकान्ते सुतैः कार्यं दानं शान्तिकपौष्टिकम् ।
एवं कृते विधौ तस्य स प्रेतो लभते गतिम् ।
बालवृद्धस्य यूनश्च पञ्चकेषु मृतस्य च ॥
विधानं यो न कुर्वीत विघ्नस्तस्य प्रजायते ।

ब्रह्मपुराणेऽपि—

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते ।
न तस्योर्ध्वगतिर्दृश्या सन्ततौ न शुभं भवेत् ॥
न तस्य दाहः कर्तव्यो विनाशः स्वेषु जातिषु ।
पञ्चकानन्तरं कार्यं कार्यं दाहादिकं खलु ॥
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् ।
क्रियते मानुषाणां तु सद्यः सन्ततिकारणात् ॥
विप्रस्य नियतः कार्यो दाहस्तु विधिपूर्वकम् ।
धनिष्ठा पञ्चके जीवो मृतो यदि कथञ्चन ॥
त्रिपुष्करे याम्यभे च कुलजान्मारयेद् ध्रुवम् ।
तत्रानिष्टविनाशार्थं विधानं समुदीर्यते ॥
दाहदेशे शवं नीत्वा स्नापयेच्च प्रयत्नतः ।
दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः ॥
यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् ।
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ॥
प्रेतहर्ता पञ्चमश्च नामान्येतान्यनुक्रमात् ।
प्रथमां शिरसि न्यस्य द्वितीयां नेत्रयोर्न्यसेत् ॥
तृतीयां वामकुक्षौ तु चतुर्थीं नाभिमण्डले ।
पञ्चमीं पादयोर्न्यस्य तत्र पञ्चाहुतीर्हुनेत् ॥
दत्त्वा चोदकधारां तु निर्दहेच्च ततः शवम् ।
सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् ॥

कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद् द्विजन्मने ।
ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः ॥
माषमुद्गयवव्रीहिप्रियङ्ग्वादि प्रयच्छति ।
स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम् ॥
गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये ।

बौधायनीयशान्तिसर्वस्वे—

ये पञ्चके मृता विप्रास्तेषां शान्तिं विधानतः ।
अतीते सूतके कुर्यात्केचित्तद्दक्षयोगतः ॥
स्वगृह्योक्तविधानेन कृत्वाऽग्नेः स्थापनं ततः ।
यमादिभ्यो निरुप्याथ श्रपयित्वा पृथक् पृथक् ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥
एकैकामाहुतिं हुत्वा चान्ते स्विष्टकृदादिकम् ।
कृष्णाङ्गां कृष्णवस्त्रां च हेमनिष्कसमन्विताम् ॥
दद्याद्विप्राय शान्ताय प्रीतो भवतु मे यमः ।

अत्र च मूलादर्शनादन्यथैव विभावितो विधिः केनचित् ।

स्मृत्यन्तरेऽपि—

धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे ।
न्यस्याहुतित्रयं दद्यात्कर्ता वह वपामिति ॥
ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः ।
इतरं निखनेदेव जले वा प्रतिपादयेत् ॥
द्विपादर्क्षमुखे तद्वद्धिरण्यशकलं मुखे ॥ इति ।

अथ त्रिपादर्क्षमृतसंस्कारः ।

स च यद्यपि पृथक् न श्रूयते तथाऽपि पञ्चकविधिना त्रिपु-

ष्करविधिना वाऽत्र संस्कारः कर्तव्यः। शान्तिकं च तथैव कार्यम्। परन्तु कर्तव्यप्रतिमादौ त्रित्वसंख्या कार्या।

पञ्चकस्य विधानेन त्रिपादर्क्षमृतं नरम्॥
संस्कुर्याच्छान्तिकं चान्ते तद्वत्कुर्वीत पुत्रकान्॥

इतिस्वर्गसोपानपद्धतौ स्मृत्यन्तरवचनात्।

अथ देशान्तरमृताहिताग्निसंस्कारः।

तत्र दिवोदासप्रकाशे ब्रह्मपुराणम्—

आहिताग्नौ विदेशस्थे मृते सति कलेवरम्।
निधेयं नाग्निभिर्यावत्तदीयैरपि दह्यते॥
तावच्च दक्षिणाग्नौ च कुशैरास्तीर्य वेदिकाम्।
अधोमुखीं तु समिधं कारयित्वा विधानवत्॥
परकीयेन वत्सेन दुग्ध्वा तां गां च तद्गृहे।
गोक्षीरेणाथ तेनैव जुहुयादग्निहोत्रकम्॥
पश्चादग्नीन्समारोप्य यज्ञभाण्डानि तान्यपि।
उपयच्छेत विप्राय ततो दृषदमेव हि॥
मथित्वाऽग्निप्रणयनं कृत्वा तत्कुणपं दहेत्।

देशान्तरमृतस्य कृतलौकिकाग्निदाहस्यापि तदस्थ्नामपि यज्ञपात्रैर्दाहः कार्यः।

तदुक्तं छन्दोगपरिशिष्टे—

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा।
दाहयेदूर्णमाच्छाद्य पात्रन्यासादि पूर्ववत्॥
अस्थ्नामलाभे पर्णानि शकलान्युक्तयाऽऽवृता।
दाहयेदुक्तसंख्यानि ततः प्रभृति सूतकम्॥

अथ प्रोषितस्य जीववार्तानाकर्णने संस्काराः।

जातूकर्ण्यः—

पितरि प्रोषिते यस्य न वार्ता नैव चागमः।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम्॥

कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमेव सर्वाणि प्रेतश्राद्धानि सञ्चरेत् ॥ इति ।

तथा दिवोदासे—

देशान्तरं गतः कश्चित्पुनर्व्याहृत्य नागतः ।
पुत्रस्तस्य न जानाति जीवन्तं च तथा मृतम् ॥
वृद्धस्य दशवर्षाणि यूनः पञ्चदशैव तु ।
प्रमादाद्वर्षमेकं तु ततो नारायणो बलिः ॥ इति ।

जटमल्लविलासेऽपि—

अनाकर्णितवार्त्तस्य प्रोषितस्य पितुः सुतः ।
ऊर्द्ध्वं पञ्चदशाद्वर्षादौर्द्ध्वदेहिकमाचरेत् ॥

पितृव्यतिरिक्तविषये बृहस्पतिः—

यस्य न श्रूयते वार्ता यावद् द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणम् ॥

कालादर्शेऽपि —

अन्येषां द्वादशादब्दात्पूर्वमुक्तैव तत्तिथिः ॥ इति ।

अत्र व्यवस्थामाह प्रयोगसारः—"पूर्ववयस्के प्रोषिते एकविंशत्यब्दादूर्द्ध्वं, मध्यमवयस्के पञ्चदशाब्दादूर्द्ध्वम्, अन्त्यवयस्के द्वादशादूर्द्ध्वं चान्द्रायणत्रयं त्रिंशत्कृच्छ्राणि चरित्वा पश्चात्संस्कारं कुर्यात्" इति।

अस्य च पैतृमेधिकारम्भकाल उक्तो जाबालिना—

यन्मासे यत्र दिवसे यो गतस्तस्य तद्दिनम् ।
कुर्यात्प्रतिकृतेर्दाहं दिनाज्ञानेऽपि तत्कुहूः ॥

अथ कृतौर्द्ध्वदेहिकस्यापि प्रत्यागतस्य संस्कारः ।

तत्र वृद्धमनुः—

जीवन् स्यादि समागच्छेद् घृतकुम्भे निमज्ज्य तम् ॥
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्यात्त्रिरात्रमथवाऽस्य तु ।

स्नात्वोद्वहेत्तां भार्यामन्यां वा तदलाभतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मन्तीं कुर्यादीप्सितांश्च क्रतूंस्ततः ॥ इति ।

आहिताग्नेर्यत्र पुरोडाशस्तत्रानाहिताग्नेश्चरुः ।

तथाच गृह्यप्रायश्चित्ते—

"य एवाहिताग्नेः पुरोडाशास्त एवानाहिताग्नेश्चरवः" इति॥

कालादर्शेऽपि—

यद्यागच्छेत्पुमाञ्जीवन्पैतृमेधिकसंस्कृतः ।
घृतमध्ये स्थापयित्वा तमुत्थाप्य शुभे क्षणे ॥
संस्कृतं जातकर्माद्यैरुपनीतं विधानतः ।
द्वादशाहं त्रिरात्रं वा विहितोपोषणव्रतम् ॥
गिरावागत्य पूर्वां वा तदभावे परां स्त्रियम् ।
ऊढवन्तं च संस्कुर्याच्चरुणाऽऽयुष्मतेन च ॥

अत्र प्रोषिते जीवत्येव तद्वार्तानाकर्णने मिथ्यैव मरणाकर्णने वा तत्संस्कारे क्रियमाणे पत्न्यपि यदि सहगमनं करोति, तदा तस्यास्तद्वैधं सहगमनं भवत्येव, भर्तृमरणज्ञानस्यैव सहगमननिमित्तत्वात् । तत्पमात्वस्य तु गौरवेणोपादानसम्भवात् प्रतीक्षाकालविधायकशास्त्रबाधाच्च ।

अत एव मार्कण्डेयपुराणे—कुवलयाश्वचरिते पातालकेतुना मिथ्यैव कुवलयाश्वमरणे उक्ते मदालसायाः प्राणत्यागः संस्कारश्च लिङ्गं दृश्यते । पुत्रावूचतुः—

ततस्स राजा संस्कारं पुत्रपत्नीमकारयत् ।
निर्गम्य च बहिस्तातो ददौ पुत्राय चोदकम् ॥ इति ।

तेन यथा मरणज्ञानं तत्संस्कारे निमित्तं तथा सहगमनस्यापि निमित्तमिति । अत एव तादृशमरणे स्त्रियाः प्रायश्चित्तादावपि—

अग्रतः पृष्ठतो वाऽपि तत्रस्त्या म्रियते तु सा ॥

इत्यादिना निर्णयः पूर्वमुक्त एव ।

तथा—

स्नात्वोद्वहेत तां भार्यामन्यां वा तदलाभतः ।

इत्यनेनापि सहगमनादिना तन्मरणे तदलाभो भवतीति सूचितम् ॥

अथ यथोक्तसंस्कारसंस्कृतस्य पिण्डोदकदानविधिः ।

तत्र पारस्करः—

"मृन्मये तां रात्रिं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहि पिबेदं क्षीरम्" ॥

धर्मप्रदीपेऽपि—

जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।

मत्स्यपुराणेऽपि—

यस्मात्प्रेतपुरं प्रेतो द्वादशाहेन नीयते ।
गृहपुत्रकलत्रं च द्वादशाहं स पश्यति ॥
तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा ।
सर्वथा तापशान्त्यर्थमध्वविश्रमनाशनम् ॥

अथ अवयवपिण्डदानविधिः ।

ब्रह्मपुराणे—

मृन्मयं भाण्डमादाय नरः स्नातः सुसंयतः ।
सुशुद्धं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥
ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि ।
तण्डुलप्रसृती तत्र प्रक्षाल्य द्विः पचेत्स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रं केशकीटादिवर्जितम् ।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम् ॥
तत्पृष्ठे संस्तरेद्दर्भान् याम्याग्रान्देशसम्भवान् ।
ततोऽवनेजनं दद्यात्संस्मरेद्गोत्रनामनी ॥

तिलसर्पिर्मधुक्षीरैः सिञ्चितं तमुमेव हि ।
दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ॥
फलमूलगुडक्षीरतिलमिश्रं तु कुत्रचित् ।
अर्घैः पुष्पैस्तथा दीपैर्धूपैस्तोयैश्च शीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद्बाष्पमयी शिखा ॥
तावत्स सम्मुखस्तिष्ठेत्सर्वतोये क्षिपेत्ततः ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥

लाहरे वृद्धप्रचेताः—

नवान्यादाय भाण्डानि आलुकं चरुकं तथा ।
तोयार्थं तु ततो गच्छेत्गृहीत्वा पुरुषं पुरः ॥
गृहीत्वा लकुटं यत्नात्सर्वदुष्टनिवारणम् ।
ततो गृहं सम्प्रविशेत्प्रेतस्यान्नं तु यत्सदा ॥
तस्य प्रसृतिमादाय कर्तव्या पिण्डकर्मणि ।
द्विःप्रक्षाल्य तु तां सम्यक् चरुं सम्पादयेत्ततः ॥
तं सबाष्पमथादाय दर्भेषु विनिवेशयेत् ।
दक्षिणाग्राश्च दर्भाः स्युः स च वै दक्षिणामुखः ॥
द्वारदेशे प्रदातव्यो न देवायतने क्वचित् ।
पिण्डमुद्धृत्य तत्सर्वं नामगोत्रेण चार्पयेत् ॥
वाग्यतः प्रयतश्चैव तिष्ठेत्प्रेतस्य सन्निधौ ।
ततो बाष्पे निवृत्तेऽस्य नद्यां तु प्रक्षिपेत्तु तत् ॥

## अथ पिण्डनिर्वापदेशः ।

तत्र शुनःपुच्छः—

द्वारदेशे प्रदातव्यो देवतायतनेषु वा । इति

वृद्धप्रचेतसा देवतायनं निषिद्धम्—

द्वारदेशे प्रदातव्यो न देवायतने क्वचित् । इति ।

ब्राह्मेऽपि—

द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वै गौरमृत्तिकाम् । इति ।

अत्र च यथासम्भवं विकल्पः ॥

शङ्खोऽपि 'भूमौमाल्यं पिण्डं पानीयमुपले वा दद्युः' ।

अथ पिण्डद्रव्याणि ।

तत्र शुनःपुच्छः—

फलमूलैश्च पयसा शाकेन च गुडेन च ।

तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ॥

शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत् ॥

द्रव्यनियममप्याह स एव—

प्रथमेऽहनि यद् द्रव्यं तदेव स्याद्दशाहिकम् ।

कर्तृनियमोऽपि परिशिष्टे—

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।

प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

ब्राह्मेऽपि—

प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः ।

यत्नेनाहःसु शेषेषु स एव प्रददात्यपि ॥

देशनियमोऽपि परिशिष्टे—

यत्रैको दीयते पिण्डस्तत्र पिण्डान् समापयेत् ।

कर्तृदेशविषये विशेषो मैत्रायणीयगृह्यपरिशिष्टे—

स्वगृहे विद्यते पुत्रः पिता ग्रामान्तरे मृतः ।

केनापि तत्र चारब्धमग्निपिण्डोदकादिकम् ॥

पुत्रः सञ्चयनात्प्राक्चेद्गच्छेदूर्ध्वं स आचरेत् ।

स्वगृहे तत्र वा सर्वं प्रेतकार्यं सपिण्डनम् ॥

तथा—

भयस्थानेऽथवा मार्गे मृतस्तत्र च संस्कृतः ।

न तिष्ठति जनः पिण्डं तत्र तत्र च वर्त्तयेत् ॥

मन्त्रैर्दाहोऽस्थिसञ्चयनं च संस्कारस्तस्मिन्कृते तत्र च भयादिना स्थातुमशक्तो यत्र यत्र प्रेतकार्यकृद्गच्छेत्तत्रैव पिण्डोदकदानादि सपिण्डनान्तं समापयेदित्यर्थः ।

इतिश्राद्धकल्पः ॥

तदेवं विरोधे यथाचारमापदनापदादिभेदेन वा व्यवस्थाऽश्रयणीया। अन्ये त्वस्य पूर्वापवादत्वमेवाहुः।

सहगमनेऽपि द्रव्याद्येकत्वनियमो धर्मवृत्तौ—

प्राणांस्त्यजति या नारी भर्तारमनु वै मृता।
तस्या अपि यथा कुर्यात्पितृसंस्कारसत्क्रियाम्॥
अग्निश्चरुस्तथा होमो ह्युपस्थानं तथैव च।
सकृदेव हि कर्तव्यो विना पिण्डं तिलोदकम्॥
उत्तरीयं शिलापात्रमग्निश्चैव तथा चरुः।
एकमेव भवेत्कर्ता दम्पत्योः सहयायिनोः॥
नवश्राद्धं सपिण्डान्तं श्राद्धं षोडषकं तथा।
एक एव सुतः कुर्याद्दम्पत्योस्तु पृथक् पृथक्॥ इति।

पिण्डानां च गात्रपूरकत्वमुक्तं पाद्मे—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा।
द्वितीयेन तु कर्णाक्षिनासिकाश्च समासतः॥
गलांसभुजवक्षांसि तृतीयेन यथाक्रमम्।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च॥
जानुजङ्घं तथा पादौ पञ्चमेन तु सर्वदा।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः॥
दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः॥ इति।

एवं दशमपिण्डस्य दशमदिनकर्तव्यताप्राप्तौ वर्णविशेषेणोत्कर्षमाह—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा॥
शूद्राणां दशमः पिण्डो मासे पूर्णे विधीयते॥ इति।

अत्रापरो विशेषो विष्णुनाऽभिहितः—'यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः' इति। ब्राह्मणस्य दश, क्षत्रियस्य द्वादश,

वैश्यस्य पञ्चदश, शूद्रस्य त्रिंशदित्यर्थ इति मिताक्षरा ।

तदुक्तं लाहरे पारस्करेण—

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः ॥

उक्तसंख्यायामसमर्थान्प्रति संख्यान्तरमाह स एव—

प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान्दद्युर्दशैव तु ।
श्राद्धकर्माणि संप्राप्ते पिण्ड एको विधीयते ॥

याज्ञवल्क्येन तु पिण्डत्रयमेवाभिहितम्—

पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ इति ।

पिण्डपितृयज्ञप्रक्रियया मन्त्रवर्जितया प्राचीनावीतित्वादिरूपया प्रेतायान्नम् अन्नमयः पिण्डो दिनत्रयं देयम् । इति लाहरमिताक्षरयोरर्थः ।

अत्रेयं व्यवस्था चतुर्णामपि वर्णानां यावदाशौचं विष्णुपारस्कराभ्यां प्रतिपादितं पिण्डदानं मुख्यः कल्पः । तत्राशक्तौ—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।

इत्यादिब्रह्मपुराणोक्तो दशमपिण्डोत्कर्षा एव मध्यमः कल्पः । तत्राप्यशक्तौ दशादिनेष्वेव दशपिण्डदानमिति जघन्यः कल्पः । पिण्डाल्पत्वबहुत्वाभ्यां प्रेतस्योपकारतारतम्यमिति विज्ञानेश्वरः । वस्तुतस्तु योगिवाक्यमनुपनीतविषयमित्यनुपदमेव वक्ष्यामः । इहापरं वक्तव्यमेकादशाहश्राद्धविचार एव वक्ष्यते । अत्राशक्तं प्रति पक्षान्तरमप्युक्तं धर्मप्रदीपे—

प्रथमेऽन्हि तृतीये वा पञ्चमे सप्तमेऽपि वा ।
द्वौ द्वौ पिण्डौ प्रदातव्यौ शेषांस्तु दशमेऽहनि ॥ इति ।

### अथ त्र्यहाद्याशौचे पिण्डविधिः ।

तत्र शातातपः—

आशौचस्य च ह्रासेऽपि पिण्डान्दद्याद्दशैव तु ।

पारस्करः—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात्तृतीयेऽन्हि वस्त्रादि क्षालयेत्तथा॥ इति।

दक्षस्त्वन्यथाऽऽह—

प्रथमेऽहनि तं पिण्डं द्वितीये चतुरस्तथा।
तृतीये पञ्च वै दद्याद्दशपिण्डाविधिः स्मृतः॥

ब्रह्मपुराणेऽपि—

त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव तु।
द्वितीये त्वन्हि चत्वारस्तृतीये पञ्च चैव हि॥ इति।

अनयोः पक्षयोस्त्र्यहाशौचे याहच्छिको विकल्प इति चिन्तामणिः॥

### अथ युद्धहतस्य पिण्डविधिः।

मनुः—

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च।
सद्यः सन्तिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः॥ इति।(म.५।९८।)

यज्ञः पिण्डदानादिरूपः, सन्तिष्ठते समाप्तो भवतीत्यर्थः।

ब्रह्मपुराणेऽपि—

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा॥ इति।

अत्र पक्षद्वयेऽप्येकादशाहादिकमेकादशाह एवेति वक्ष्यते॥

### अथानुपनीतैपिण्डाविधिः।

तत्र प्रचेताः—"असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु" इति।

मरीचिरपि—

प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम्।
प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः॥ इति।

एतदप्यनुपनीतविषयमिति मिताक्षरा, पूर्ववाक्यानुरोधात्।

अत्रानुपनीतस्य त्रिवर्षस्य कृतचौलस्य च त्रिरात्रमाशौचं, दाहोदकदाने त्वनित्ये,

तूष्णीमेवोदकं कुर्यात् तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानां नाम्नि वाऽपि कृते सति ॥ (म.५।७०।)

इति लौगाक्षिवचनात् ,

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यान्नाम्नि वापि कृते सति ॥

इति मनुवचनाच्च । तथा पिण्डोऽपि विहितः प्रचेतसा—'असंस्कृतानां भूमौ पिण्डं दद्यात्' इति । तस्य च त्रिरात्रव्याप्तित्वम् , 'यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः' इति विष्णुवचनात् । तथाचानुपनीतस्यापि पिण्डत्रयदानमित्यागतम् । तदेव च स्पष्टीकृतं याज्ञवल्क्येन—

(१)पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ इति ।

एवं तावत्प्रेतोपकारतारतम्यं दशपिण्डविधिना विकल्पो वाऽस्य न दोषः, प्रत्युतानेकप्रचेतोविष्ण्वादि वाक्यैकमूलत्वकल्पनालाघवमेव गुणः । किञ्च प्रचेतोवाक्यविहितपिण्डमात्रस्यावच्छेदकसंख्याकाङ्क्षायां 'प्रेतायान्नं दिनत्रयम्' इत्यपेक्षितसंख्याविधानमपि स्यात् । न च विष्णुवाक्यानुरोधात्त्रिरात्रव्यापित्वेनास्य त्रित्वसंख्या लब्धैवेति किमनेनेति वाच्यम् । अर्थप्राप्तायास्तस्याः स्पष्टविधानेनाकाङ्क्षापूरणमित्युक्तमेवेति ।

दिवोदासेऽपि—

अव्रते निधनं प्राप्ते विप्रादौ शूद्रजातिवत् ।
क्रियाः सर्वाःसमुद्दिष्टाः सपिण्डीकरणं विना ॥
उदकं पिण्डदानं च कृतचूडे विधीयते ॥ इति ।

शूद्रवदित्यनेनामन्त्रकत्वमुक्तम् । उपनयनोत्तरं सर्वेषां स्वजा-

(१) 'पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया' ।

त्युक्तमेव । शूद्रस्य तूपनयनाभावात्कुतः प्रभृति जात्याशौचादिप्राप्तिरित्यपेक्षायामाह कल्पतरौ ब्रह्मपुराणम्—

अनुपनीतो विप्रस्तु राजा चैवाधनुर्ग्रहः ।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रयुक् ॥
म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव तु ।
द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकम् ॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतः परम् ॥ इति ।

द्विजन्मनामुपनयनधनुर्ग्रहणप्रतोदग्रहणकालः षडाब्दिकः, शूद्राणां तु वस्त्रग्रहणकालः पञ्चाब्दिकस्तेन शूद्रस्य कृतचौलस्याऽऽवस्त्रग्रहणकालादापञ्चमवर्षात् त्रिरात्राशौचमुक्तं पिण्डदानं च अतऊर्ध्वं स्वजात्युक्तमित्यर्थः ।

## अथ कुमारीणां पिण्डविधिः ।

दिवोदासे मरीचिः—

स्त्रीणाममन्त्रकं कार्यं तथाऽव्रतसुतस्य च ।
प्राग् द्विजातेर्व्रतादेशात्ताश्च कुर्यात्तथैव तत् ॥

ताः क्रियाः तदोर्द्ध्वदेहिकम् । आपस्तम्बोऽपि—

मित्रबन्धुसपिण्डेभ्यः कुमारीस्त्रीभ्य एव च ।
नियमान्मासिकं कार्यं सम्वत्सरमतोऽन्यथा ॥

अतोऽन्यथेति नियमं विना, साम्वत्सरिकश्राद्धमिच्छया कुर्यान्नवेत्यर्थः । कृतचूडाया अनूढायाः पूर्वं क्रियामात्रं पित्रा कार्यमिति श्रीदत्तः। अन्ये तु कृतवाग्दानाया अपि सपिण्डनवर्जं क्रियामाहुः ॥

## अथ पाथेयश्राद्धम् ।

तत्र शातातपः—

भूलोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् ।
तत्पाथेयं हि भवति मृतस्य मनुजस्य हि ॥

ब्रह्माण्डपुराणे—

श्राद्धं कुर्यात्प्रयत्नेन पुत्रः पाथेयसंज्ञकम् ।

तत्पाथेयं समुद्दिष्टं यातुः प्रेतपुरं प्रति ॥
सर्वेषां तत्समुद्दिष्टमेकोद्दिष्टं नवादिवत् ॥ इति ।

नवादिवत् नवश्राद्धवदित्यर्थः ।

**अथास्थिसञ्चयनम् ।**

तत्र सम्वर्तः--

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह ॥ इति ।

विष्णुः'–चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्यात्तेषां गङ्गाम्भसि प्रक्षेपः' इति ।

पैठनिसिः—

गत्वाऽरण्ये चतुर्थेऽह्नि पूर्वाह्णे त्वस्थिसञ्चयः ।

कात्यायनोऽपि—

अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं भवेत् ।

एवं कालनानात्वे वर्णविशेषेण व्यवस्थोक्ता दिवोदासनिबन्धे ब्रह्मपुराणेन-

कुर्युस्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च ।
पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि ॥
अस्थ्नां तु सञ्चयः प्रेते क्रियते देशगौरवात् ।

त्र्यहाद्याशौचेऽपि विशेष उक्तस्तत्रैव—

त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वास्थिसञ्चयः ।
सद्यःशौचे तत्क्षणं तु कर्तव्य इति निश्चयः ॥

अस्थ्यादिदाहे विशेषमाह शौनकः—

पालाशेष्वस्थिदाहे च सद्यः सञ्चयनं भवेत् ।

भृग्वादिमरणे तु द्वितीयादिने-

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।

इति मनुस्मरणात् । यत्तु सर्वपक्षाणां सर्वविषयत्वेनोपन्यसनं, तद्व्यवस्थापकवाक्यादर्शनमूलकमिति न श्रद्धेयम् । न च व्यवस्थापक्षे सप्तमनवमदिनपक्षयोर्निर्विषयतास्यादिति वाच्यम् ?

श्राद्धचिन्तामणिना—

सप्तमे वैश्यजातेस्तु नवमे शूद्रजन्मनः ।

इत्यस्यैव पाठस्यादरणात् । अत्र वारनक्षत्रनिषेधोऽपि यमेनोक्तः—

भौमार्कमन्दवारेषु तिथियुग्मेषु वर्जयेत् ।

वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसञ्चयम् ॥

मदात्जन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ॥ इति ।

तदेतद्दाहदिनादेव यथोक्तादिने कार्यमित्याहाङ्गिराः—

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः ।

शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथाविधि ॥ इति ।

साग्निकानग्निकयोः सूतकं संस्कारोत्क्रान्तिदिनादेव, सञ्चयनं तूभयोरपि संस्कारदिवसादेवेति लाहरः ॥

अथेतिकर्तव्यता ।

ब्रह्मपुराणे—

स्नात्वा त्रिरात्रं कुर्वन्ति प्रेतायोदकतर्पणम् ।

श्मशाने देवतायोगं चतुर्थे दिवसे ततः ॥

भवन्ति पूजिता यस्मात्तत्रस्थाः शङ्करादयः ।

नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥

येऽस्मिन्श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।

तेऽस्मत्सकाशाद् गृह्णन्तु बलिमष्टाङ्गमुत्तमम् ॥

एवं कृत्वा बलीन् सर्वान्क्षीरेणाभ्युक्ष्य वाग्यतः ।

ततो यज्ञियवृक्षोत्था शाखामादाय वाग्यतः ॥

अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।

प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ॥

पञ्चगव्येन सुस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ।

प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे ॥

अरण्ये वृक्षमूले वा शुद्धे संस्थाप्य तान्यथ ।

तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले ॥
कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा समाहितः ।
गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ॥ इति ।

इतोऽपि विशेषोऽन्यतोऽवगन्तव्यः । अत्र विशेषमाह शौनकः—

अजिनं कम्बला दर्भा गोकेशाः शाणमेव च ।
भूर्जपत्रं ताडपत्रं सप्तध वेष्टनं स्मृतम् ॥
हैमं च मौक्तिकं रौप्यं प्रवालं नीलकं तथा ।
निक्षिपेदस्थिमध्ये तु शुद्धिर्भवति नान्यथा ॥
ततो होमं प्रकुर्वन्ति तिलाज्येन विचक्षणः ।
उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतम् ॥
ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते ।
मूत्रं पुरीषाचमनं कुर्वन्नास्थीनि धारयेत् ॥
हेमश्राद्धं ततः कुर्यात्पितॄनुद्दिश्य यत्नतः ।
पिण्डदानं प्रकुर्वीत ततश्च तिलतर्पणम् ॥ इति ।

अथासम्बन्ध्यस्थिवहने प्रायश्चित्तं ब्रह्मपुराणे—

मातुः कुलं पितृकुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ॥

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये तु केचित् ।
सद्भावकस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥
कुलद्वयं चाप्यथ वर्जयित्वा मातापित्रोर्जन्मभूम्याश्रितं च ।
अस्थीनि चान्यस्य वहन्नयन् वा भाग्यक्षयं लभते दुष्कृतं च ॥

## अथ नवश्राद्धानि ।

तत्राङ्गिराः—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धं प्रकीर्तितम् ॥

वशिष्ठोऽपि—

सप्तमेऽह्नि तृतीये च प्रथमे नवमे तथा ।

एकादशे दिनेऽपि स्युर्नवश्राद्धानि षट् तथा ॥

एतेषां वर्णविशेषे व्यवस्थोक्ता भविष्यत्पुराणे—

नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥

अत्र च 'आद्यन्तयोर्वर्णयोस्तु षट्'इति वचनेन सर्वशाखीयब्राह्मणानां षडेवेति प्राप्ते शाखाविशेषेण व्यवस्थामाह शिवस्वामी—

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाः षडित्याहुर्विभाषा तैत्तिरीयिणाम् ॥ इति ।

सचायं व्यवस्थापक्षोऽत्र पक्षद्वयस्य व्यवस्था शिवस्वामिना दर्शितेत्यनेन माधवाचार्यैरप्यङ्गीकृतः । यत्तु केनचिदाश्वलायनानामपि षडेव नवश्राद्धानि प्रयोगे प्रतिपाद्यान्तिमाभिधानानन्तरं शिवस्वामिमते नैतत्तन्मते पञ्चैव नवश्राद्धानिपूर्वोक्तानीत्यभिहितं, तच्छिवस्वामिवचनस्य व्यवस्थापकत्वेन विशेषत्वमनभिसन्धायाङ्गिरोवचनेन तुल्यविषयतामवगत्याष्टदोषदुष्टविकल्पाश्रयणेन स्वस्य मीमांसाभिनिवेशख्यापनमेव कृतमिति मन्यामहे । किञ्च—

यत्राश्वलायनेनोक्तोविशेषः कोऽपि न स्वयम् ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

इत्यादिवाक्येनाश्वलायनाभ्यर्हिततरेण बौधायनेनापि पञ्चैव नवश्राद्धानि प्रतिपादितानि । यथा—"मरणाद्विषमदिनेष्वेकैकनवश्राद्धं कुर्यादानवमाद्यन्नवमं विच्छिद्येतैकादशेऽह्नि कुर्यात्" इति । व्याकृतं चैतन्मदनपालेन—'आनवमादित्यत्राङभिविधौ नवमभिव्याप्य नवश्राद्धं कुर्यात् । नवमदिनकर्तव्यं नवश्राद्धं कुर्यात् । नवमदिनकर्तव्यं नवश्राद्धं यद्यन्तरितं तर्हि तदेव तदेकादशेऽह्नि कुर्यादिति ।

केचित्पञ्चैव नवमं भवेदन्तरितं यदि ।
एकादशेऽह्नि तत्कुर्यादिति स्मृतिकृतो विदुः ॥

इति वसिष्ठस्मरणात् तेनापि पञ्चैव नवश्राद्धान्याश्वलाय नानां प्रतीयन्ते। अपि च एकादशादिनकर्तव्यं नवश्राद्धमभिधाय शिवस्वामिमते नैतदिति वदता एकादशादिनकर्तव्यमेव शिवस्वामिनोऽनभिमतमिति कथमवधारितम्। तद्वाक्यविहितपञ्चसंख्यायाः प्रथमदिनकर्तव्यहानेनाप्युपपत्तेः। तथासति च 'मरणदिनाद्विषमदिनेषु' इति बौधायनीयवाक्येनापि एकमूलकता स्यादित्यलम्।

अथ यस्यकस्यापि नवश्राद्धस्यान्तराये निर्णयमाह कण्वः—

नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते॥

सातन्त्र्यं समानतन्त्रत्वम्, उत्तरनवश्राद्धदिनमिति यावत्।

धर्मप्रदीपेऽपि—

दैवाद्यदि नवश्राद्धमतीतं प्रथमेऽहनि।
तृतीयेऽहनि कर्तव्यं विषमे वाऽप्यसम्भवात्॥

अन्योऽपि विशेषस्तत्रैव—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे।
नवश्राद्धं न कुर्वीत त्रिपादे पञ्चके तथा॥

नवश्राद्धे द्रव्यमाह ऋष्यशृङ्गः—

नवश्राद्धं सपिण्डत्वं पक्वान्नेन समाचरेत्।
एकोद्दिष्टादिकं चान्यद्यथाशक्ति न हापयेत्॥

अथोदकदानम्।

ब्रह्मपुराणे—

एकस्तोयाञ्जलिस्त्वेवं पात्रमेकं च दीयते।
द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा॥
पञ्चमे पञ्च षट् षष्ठे सप्तमे सप्त चैवहि।
अष्टमेऽष्टौ च नवमे नवव दशमे दश॥

येन स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः ॥
जात्युक्ताशौचतुल्यास्तु वर्णानां क्वचिदेव तु ।
देशधर्मान्पुरस्कृत्य प्रेतपिण्डान्वपत्यपि ॥

वृद्धप्रचेताः—

दिने दिनेऽञ्जलीन्पूर्णान्प्रक्षिपेत्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते ॥

प्रचेताः—

नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद् गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ॥

लाहरे आदित्यपुराणे—

आदौ तु वस्त्रं प्रक्षाल्य तेनैवाच्छादितस्ततः ।
कर्तव्यं तु सचैलं तु स्नानं सर्वमलापहम् ॥
ततः पाषाणपृष्ठे तु सर्वैर्देयं तिलोदकम् ।
एकैकेन देयास्तु विप्रायाञ्जलयो दश ॥
राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च ।
त्रिंशच्छूद्राय देयास्तु प्रेतभूमिगताय च ॥
अपसव्यं ततः कृत्वा वस्त्रयज्ञोपवीतके ।
दक्षिणाभिमुखैर्विप्रैर्देयं तोयाञ्जलित्रयम् ॥
वामाङ्गुष्ठप्रवाहेण भूमावेवाथवा क्वचित् ।
असावमुकगोत्रस्तु प्रेतस्तृप्यत्विदं पठन् ॥

अत्र च विप्रादिभ्यो दशादिसंख्या-तज्जलाञ्जलिदानमेकं कर्म, अञ्जलित्रयदानं तु कर्मान्तरम् । यद्वा प्रत्यहं देयस्याञ्जलेः संकलनैषेति लाहरः ।

कात्यायनोऽपि—

अथानपेक्षमेत्यापः सर्व एव शवस्पृशः ।
स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले ॥

विष्णुः-निर्हृत्य बान्धवाः प्रेतं संस्कृत्याप्रदक्षिणं चितिमभिगम्य सवाससो निमज्जनं कुर्युः, प्रेतस्योदकनिर्वपणं कृत्वैकं पिण्डं कुशेषु दद्युः । विशेषमाह गौतमः—'प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया' इति ।

अत्र मन्त्रमाह याज्ञवल्क्यः—

सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः । ( ३।१।५)

कात्यायनः—

गोत्रनामप्रदान्ते च तर्पयामीत्यहं वदेत् ।
दक्षिणाग्रान् कुशान् कृत्वा सलिलं तु पृथक् पृथक् ॥

वसिष्ठः—'सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन् युग्मा दक्षिणामुखाः' । बैजवापः—"उदकं दत्त्वा सकृदुन्मज्ज्याप्सु सव्यपाणेः कनिष्ठयाऽवलिखति कनिष्ठं पाणिमितरस्मिन्नेकमुदकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधा" इति । शङ्खः—'अपसव्ये वासोयज्ञोपवीते कृत्वाऽञ्जलिना वा शवैतत्ते उदकमित्युक्त्वा' इति ।

अत्रापवादमाह याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्युरुदकं पतिता न वा ॥ इति ।

मनुरपि—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥ ( म. ५।८८)

वृद्धमनुः—

क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विकर्मिणः ।

गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ इति ।

अथोदकानर्हाः-तेच पाखण्ड्यनाश्रितादयो दाहाद्यनर्हग-णनवेळायामेव प्रतिपादिताः ।

## अथाशौचदिनकर्तव्यधर्माः ।

ऋष्यशृङ्गः—

न स्वधां च प्रयुञ्जीत प्रेतपिण्डे दशाहिके ।
भाषिते तच्च ते पिण्डयज्ञदत्तस्य पूरकम् ॥
यस्य न ज्ञायते गोत्रं नाम्ना तत्पिण्डमाहरेत् ।

धर्मप्रदीपेऽपि—

अष्टादश च वस्तूनि प्रेतश्राद्धे विवर्जयेत् ।
आशिषो द्विगुणा दर्भाः स्वस्त्यस्तु प्रणवस्तथा ॥
अग्नौकरणमुच्छेषश्राद्धं वा वैश्वदेविकम् ॥
विकिरं च स्वधाकारः पितृशब्दस्तथैव च ।
अनुशब्द न कुर्वीत उल्लेखनमथोल्मुकम् ।
अपोनिषेवणं चैव आवाहनमनुव्रजम् ॥ इति ।

मरीचिः—

प्रथमेऽन्हि तृतीयेऽन्हि सप्तमे नवमे तथा ।
ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ।

ज्ञातिभिः सपिण्डैरित्यर्थः ।
तेनासपिण्डानां सूतकान्नभोजने दोषः ।

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥

इति यमस्मरणात् । उभयत्र जननमरणयोः ।
दशाहानीत्याशौचकालोपलक्षणम् ।

कुलस्य सूतकयुक्तस्यान्नमसपिण्डैर्न भोक्तव्यमित्यर्थः ।
सपिण्डानां पुनर्भोजने न दोषः ।
सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ॥

इति तेनैवाभिधानात् । इहापरमपि वक्तव्यं विस्तरभयान्नोच्यते ।

अथ मरणाशौचे ताम्बूलमपि न भक्षणीयम् ।

तथा सङ्ग्रहे—

मातापित्रोः क्षयश्राद्धे तथैव क्षयसूतके ।
ताम्बूलं चर्वयेद्यस्तु पितृहा स निगद्यते ॥

आश्वलायनः "नैतस्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारालवणाशिनः स्युः । द्वादशरात्रं महागुरुषु । ये त्वक्षारमिति, लवणाविशेषणमित्याहुस्ते लवणरसज्ञानशून्या रसनेन्द्रियहीना लोकोक्त्यैव निरस्ताः । किञ्च 'अक्षारालवणाशिन' इत्यत्रालवणाशिन इति नञमप्यपश्यन्तश्चक्षुर्हीना एव स्फुटम् । न च लवणातिरिक्तं क्षारं नास्त्येवेति वाच्यम् ।

अग्निपुराणे—

क्षारं क्षौद्रं च लवणं मधु मांसं तथैव च ।
तिलमुद्गादृते शैब्यं माषगोधूमकोद्रवाः ॥
चीनकं देवधान्यञ्च चणकं च तथैक्षवम् ।
स्विन्नधान्यं तथौषध्यमेष क्षारगणः स्मृतः ॥

अन्यत्रापि—

गोक्षीरं गोघृतं चैव धान्यं मुद्गास्तिला यवाः ।
अक्षाराः कथिता ह्येते क्षाराश्चान्ये प्रकीर्तिताः ॥ इति ।
कूष्माण्डं चणका राजमाषाश्चैव मसूरिकाः ।
ऐक्षवं चैव कुल्माषा माषधान्यं कपित्थकम् ॥
मूलकं मधु माधूकं चिञ्चिणी राजिका निशा ।
द्रव्याणि दशचत्वारि क्षाराण्येतानि वर्जयेत् ॥
व्रतोपवासदिवसे पारणासु च सर्वदा ।
पुण्येषु चैव मासेषु तथाऽऽशौचादिनेष्वपि ॥

इत्थं विवस्वान्राजेन्द्र मनुं समुपदिष्टवान्।

इति पद्मपुराणवचनात्।

गौतमः—

"मत्स्यमांसादि न भक्षयेयुराप्रदानात्"।

यावच्छ्राद्धे मांसं दीयते तावन्न भोज्यं नवश्राद्धेषु च तन्निषेधात्,

नवश्राद्धेषु सर्वत्र न मांसं दीयते बुधैः। इति।

अधःशय्यासनादीनामुपभोगादिवर्जिताः।
अक्षारालवणान्नाः स्युर्लब्धक्रीताशनास्तथा॥

अधःशय्यासना इति खट्वापीठादिनिवृत्तिः।

अङ्गिराः—

ब्रह्मचर्यं क्षितौ स्वापस्त्याज्यं मीमांसनं च तैः।

ब्रह्मचर्यं मैथुनाभावः।

विष्णुपुराणे—

शय्यासनोपभोगश्च सपिण्डानामपीष्यते।
अस्थिसञ्चयनादूर्द्ध्वं संयोगो न तु योषिताम्॥

यथाऽस्थिसञ्चयात्प्राग्नेष्यते तथाऽस्थिसञ्चयनादूर्द्ध्वमपि सपिण्डानामिदं सर्वं नेष्यत इत्यर्थः।

दिवा नक्तं च भोक्तव्यममांसं मनुजर्षभ।

ब्राह्मे—

आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्।

मार्कण्डेये—

प्रथमेऽन्हि तृतीयेऽन्हि सप्तमे नवमेऽथ वा।
वस्त्रत्यागं बहिः स्नानं कृत्वा दद्यात्तिलोदकम्॥
तैलाभ्यङ्गो बान्धवानामङ्गसम्वाहनं च यत्।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः॥

अथाशौचिनां विहितनिषिद्धानि।

तत्र कश्यपः—एषूहस्तु ब्राह्मणो नयजेन्न याजयेन्नाधीयीत नाध्यापयेन्न प्रतिगृण्हीयात् ।

जाबालः—

सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥

सन्ध्याया न स्वरूपतस्त्यागोऽपितु मन्त्रवत्याः । नैत्यकं स्नानजपादि । स्मृतिकर्म श्राद्धादि ।

मनुः—

जननाद्दशरात्रं च शावे च समुपस्थिते ।
नाधीयीत द्विजो नित्यं न चैवाकालिकेषु च ॥
महागुरौ द्वादशाहं वेदस्याध्ययनं त्यजेत्(१) ॥ इति ।

सम्वर्तः—

हानिं तेषां प्रकुर्वीत तथा मरणजन्मनोः ।

तेषां पञ्चमहायज्ञानाम् ।

शङ्खः—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते ॥

होमो वैश्वदेवहोमः ।

विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।

इति सम्वर्तस्मरणात् । यदपि 'आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते' इति विष्णुवचने होमपदं तदपि वैश्वदेवपरमेव । एवं सर्वत्रनिषेधवाक्ये होमपदं वैश्वदेवहोमपरं बोध्यम् । काम्यहोमपरं वा, तस्य प्रतिप्रसवात् । पितृकर्म दर्शश्राद्धादि, प्रेतपिण्ड क्रियाविधानात् । त्यक्तोपादानकालश्चोक्तो हारीतेन—

ततस्त्वेकादशदिने यज्ञः स्वाध्ययनानि च ।
प्रवर्तन्ते क्रियाश्चैव इत्येतन्मैत्रिरब्रवीत ॥

(१) अयं श्लोकः मनुस्मृतौ नोपलभ्यते ।

दशाहान्ते पुनः क्रिया' इति च । यमोऽपि—

एकादशेऽन्हि कुर्वीत दानमध्ययनं तपः ।

अत्र एकादशदिने इति 'दशाहान्ते' इति च स्वस्वाशौचान्त्य-दिनानन्तरदिनोपलक्षणार्थम् ।

तदुक्तं मार्कण्डेयपुराणे—

दशाहं ब्राह्मणस्तिष्ठेद्दानहोमविवर्जितः ।
क्षत्रियो द्वादशाहं च वैश्यो मासार्द्धमेव च ॥
शूद्रश्च मासमासीत निजकर्मविवर्जितः ॥ इति ।

विष्णुपुराणे—

सर्वकालमुपासीत सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

सन्ध्याविषयेविशेषमाह पुलस्त्यः—

सन्ध्यामिष्टिं चरुंहोमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन् गच्छेदधो द्विजः ॥ इति ।

तत्र सन्ध्यायां प्रकारविशेषमप्याह स एव—

सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः ॥

अस्यार्थः—

प्राणायाममन्त्रव्यतिरिक्तमन्त्रान् मनसोच्चारयेत् । प्राणायाममन्त्रांस्तु मनसाऽपि नोच्चारयेत् ; किन्तु अमन्त्रमेव प्राणायामं कुर्यात् ।

तदाह भरद्वाजः—

सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रास्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु नवा कार्यमुपस्थानं न चैवहि ॥ इति ।

मार्जनं वैकल्पिकमुपस्थानं तु नास्त्येव ।

अत एव च्यवनोऽपि—

अर्घ्यान्ता मनसी सन्ध्या कुशवारिविवर्जिता ॥ इति ।

एवं सर्वत्रामन्त्रकत्वे प्राप्तेऽर्घ्यदाने विशेषमाह स एव—

गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।

पैठीनसिरपि—"सूतके सावित्र्या वाऽञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्" इति । तदेवं सन्ध्याविधानेन निषेधवाक्यानामविशेषेण प्रवृत्तानां विशेषेऽवस्थापनं क्रियते । प्राणाग्निहोत्रमपि कार्यमित्युक्तं विद्याकरे—

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
अपोशानद्वयं त्यक्त्वा पञ्चप्राणाहुतीरपि ॥

अत्र सर्वत्र सूतकपदं मृतकस्याप्युपलक्षणमिति बहवः ।

**अथ श्रौतस्मार्तहोमेति कर्तव्यतामाह ।**

याज्ञवल्क्यः—

वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः । (३।१।१७)

वितानोऽग्नीनां गार्हपत्यादीनां समूहस्तत्र भवा अग्निहोत्रदर्शपूर्णमासाद्याः । उपास्यते प्रत्यहमित्युपासनो गृह्याग्निस्तत्र भवाः सायंप्रातर्होमरूपाश्च क्रियाः 'यावज्जीवमग्निहोत्रं जुहुयात्' तथा 'अहरहः स्वाहा कुर्यात्' इत्यादिश्रुतिविहितत्वात्कार्याः । यद्यपि 'वैतानोपासनाः कार्याः' इति सामान्येनोक्तं तथाऽपि अन्येनैव कारयितव्यम् 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणात् । यद्यपि साङ्गे कर्मण्यकर्तृत्वं, तथाऽपि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यादिति विज्ञानेश्वरव्याख्या । लाहरव्याख्या त्वेकवचनान्तं पाठमादाय वितानस्येयं वैतानी सा चासावुपासना च 'हुत्वाग्नींस्तानुपास्य च' इति वचनविहिताऽशौचेऽपि कार्या । तथा वितान सम्बन्धिन एव प्रत्यक्षश्रुतिविहिता अग्निहोत्रादिकाश्च क्रियाः कार्याः । अत्र च वितानेन क्रियाणां विशेषितत्वात् । प्रत्यक्षश्रुतिविहिता अपि ब्रह्मयज्ञादि-

क्रिया न कार्याः, अवैतानिकत्वात् । श्रुतिविहितत्वेनच विशेषणाद्वैश्वानर्यादयो न कार्याः, प्रत्यक्षश्रुतिविधानाभावादिति । मनुरपि—

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः ।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥ इति ।

अस्याऽऽद्यपदार्थमाह मेधातिथिः–'यस्यैषा बुद्धिः–'य उक्ता स्त्र्यहादयः कल्पास्ते तुल्यवद्विकल्पन्ते इति एकाहादिपक्षं परित्यज्य निष्कर्मतासुखानुरोधेन दशाहपक्षमुपाश्रयामि' इति, तं प्रत्युच्यते न वर्द्धयेदघाहानि इति । नैते तुल्या अपि तु व्यवस्थिता एवेति' । अन्ये त्वमुं पादमन्यथा व्याचक्षते—अतीतेष्वप्यहस्सु यावत्स्नानादिक्रिया न कृतास्तावन्नैव शुद्धिः, 'विप्रः शुद्ध्यत्यपः स्पृष्ट्वा' इत्यादिवचनात् । तत्राशुचित्वादननुष्ठाने न दुष्यामीति स्नानादिषु शुद्धये न प्रवर्तते, तस्येदमुच्यते—'न वर्द्धयेत्' इति । अतीतेष्वहःसु बाह्यशौचे न विलम्बितव्यमिति । नारायणसर्वज्ञस्तु मेधातिथिव्याख्यामेवानुमेने ।

अथ त्रिपाद्यर्थमाह मेधातिथिः–प्रत्यूहेदिति । अशुचित्वात्सर्वश्रौतस्मार्तनिवृत्तौ प्राप्तायामिदमुच्यते । अग्निषु क्रियाः सायंहोमाद्या न प्रत्यूहेन्न प्रत्यस्येत् । प्रत्यूहो निरासः, अननुष्ठानमिति यावत् । न च स्वयं कुर्यादत आह—न च तत्कर्म कुर्वाणः सनाभ्योऽपीति । सनाभ्योऽपि नाशुचिः स्यात्किं पुनरन्यः । तथाच गृह्यं–'नित्यानि निवर्तेरन्वैतानवर्जं, शालाग्नौ चैके' इत्युक्त्वा आह 'अन्य एतानि कुर्युः' इति । नारायणसर्वज्ञस्तु त्रिपाद्यर्थमन्यथैवाह–न प्रत्यूहेद्विघ्निता न कुर्यादग्निषु श्रौतेषु होमादिक्रिया नित्याः । तच्छ्रौताग्निसम्बन्धिकर्म सनाभ्यः सपिण्डोऽन्योपि यः साग्निः सोऽपि स्वतो होमासम्भवेऽस्याग्निषु होमं कुर्वन्नाशुचिः किमुत स्वयमित्यर्थ इति । प्रदीपस्तु आर्त्विज्यपरतया व्याचष्टे–श्रौतस्मार्ताग्निषु या हविर्यज्ञपाकयज्ञा-

दिनित्याक्रिया उक्तास्ता आशौचेऽपि न त्यजेत् । तत्राऽशौचपर्युदासात् । नचेति । तद्धविर्यज्ञादि कर्मार्त्विज्यं कुर्वाणः सनाभ्योऽपि यजमानस्य सपिण्डोऽपि नाशुचिः सुतरां यजमान इति । तदिदमसंमतं लाहरस्य । आशौचे सत्यपि ताः कुर्यात् । ननुचाशुचेः क्रियास्वनधिकारात्तत्प्रत्यूह एवोचित इत्यत आह नचेति । अत्र कुर्वाण इत्यात्मनेपदाधिकारात्तत्कर्म कुर्वन्सनाभ्योऽपि जातमृतयोः प्रत्यासन्नोऽपि नाशुचिर्भवति, किन्तु शुचिरेवेति गम्यते । तेन सनाभ्यानामार्त्विज्येऽपि भवत्येवाशौचमिति ॥

तदेवं व्याख्याविप्रतिपत्तौ देशकालानुरोधेन यथाचारं व्यवस्था ज्ञेया ।

पारस्करः—नित्यानि निवर्तेरन् इति निषेधः । तत्र प्रतिप्रसवः वैतानवर्जमिति । तेन वैतानस्य नित्यैव कर्तव्यता ।

अत्र विशेषमाह हारीतः—

कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् ।
न तु सत्रस्य विच्छेदं प्रवदन्ति मनीषिणः ॥
त्रेताधर्मोपरोधार्थमुपस्पृश्य पिता शुचिः ॥ इति ।

आशौचे स्नात्वाऽऽचम्य वैतानिकं कर्माग्निहोत्रादिकं तत्तत्काले स्वयं कुर्यात् । सत्रं नित्यानुष्ठेयमग्निहोत्रादि । त्रेतासाध्यस्य धर्मस्योपरोधार्थमनुरोधार्थमनुष्ठानार्थमिति यावत् । उपस्पृश्याऽऽचम्य पिता यजमानो यतः शुचिः स्यादिति पूर्वत्रैव हेतुकथनमित्यर्थः ।

उक्तं च गोभिलेन—

अग्निहोत्रस्य होमार्थं शुचिस्तात्कालिकी भवेत् ।
पञ्चयज्ञान्न कुर्वीत ह्यशुद्धः पुनरेव सः ॥ इति ।

वैय्याघ्रपादोऽप्याह—

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥ इति ।

प्रयोगपारिजाते स्मृत्यन्तरमपि—

वर्जयेत्सूतके कर्म नित्यनैमित्तिकादिकम् ।
आहिताग्नेः सदा शुद्धिः सद्य एव विधीयते ॥ इति ।

जाबालोऽपि—

उभयत्र दशाहानि सपिण्डानामशौचकम् ।
स्नानोपस्पर्शनात्पश्चादग्निहोत्रार्थमर्हति ॥

आशौचे यानि कर्माणि कर्तव्यानीति विशेषविधिरस्ति तेषु तात्कालिकी कर्मसङ्कल्पपूर्वक्षणमारभ्य कर्मापवर्गक्षणपर्यन्तं तत्कर्म-योग्यत्वलक्षणा शुद्धिर्वेदितव्या, येषां पुनर्पञ्चमहायज्ञादीनामा-शौचे कर्तव्यताविधिर्नास्ति तेषु कर्मस्वयोग्यतैवेत्यर्थः । यदि तु स्वयमशक्तस्तदा सपिण्डेनाप्यग्निहोत्रादि कारयेत् ।

तदुक्तं मनुना—

'प्रत्यूहेन्नाग्निषु क्रियाः' ।
न च तत्कर्म कुर्वाणस्सनाभ्योऽप्यशुचिर्भवेत् ॥ इति ।

तच्छ्रौताग्निसाध्यं कर्म कुर्वन्सनाभ्यस्सपिण्डोऽपि नाशुचिः, किन्तु शुचिरेवेत्यर्थः । अस्यचान्ये व्याख्यापक्षाः पूर्वं प्रदर्शिता एव । तस्याप्यसम्भवेऽन्येन कारयितव्यम्, 'अन्य एतानि कुर्युः' इति पैठीनसिस्मरणादिति केचित् । अन्ये असपिण्डा इत्यर्थः । एवं यथाकथञ्चिदपि कर्तव्यमेव श्रौतं, न तु त्याज्यम् ।

तदाह जाबालः—

जन्महान्योर्वितान्यस्य कर्मत्यागो न विद्यते । इति ।

मरीचिस्तु प्रत्यवायमेवाह—

दर्शं च पौर्णमासं च कर्मवैतानिकं च यत् ।
सूतकेऽपि त्यजन्मोहात्प्रायश्चित्तीयते द्विजः ॥

पुलस्त्योऽपि—

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन्गच्छेदधो द्विजः ॥ इति ।

सन्ध्या यथा सूतके उपादिष्टा, इष्टिराहिताग्नेर्दर्शपूर्णमासादिका, चरुराहिताग्नेः स्थालीपाकादिरूपः ।

अत्र प्रयोगपारिजातः—श्रौतानामप्यग्निहोत्रादीनां प्रथमारम्भात्प्रागा शौचे एव । प्रतिप्रसवविधीनां प्रथमारम्भोत्तरकालानुष्ठेयाग्निहोत्रादिविषयत्वादिति व्याचष्टे । यत्तु—

तौ चापि सूतके शावे पर्वणीष्टिं महापदि ।
स्त्रीधर्मिण्यां च भार्यायां न कुर्यातां कदाचन ॥

इत्याश्वलायनवचनम्, तत्काम्येष्टिपरम्, "काम्या इष्टीश्च वर्जयेत्" इति वसिष्ठस्मरणात् । यद्वा विहितप्रतिषिद्धत्वादिष्टौ विकल्पः । ताविति प्रकरणात् श्रौतस्मार्तानुष्ठातारौ । यदपि च—

स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः ।
श्रौताग्निस्तु सकृद्धुत्वा समाप्ते वा स्वयं हुनेत् ॥

इत्याश्वलायनवचनं, तस्याप्ययमर्थः—श्रौताग्निस्सूतकसम्भावनायां प्रथममेवाऽग्रेतनान् होमानाकृष्य सकृदेव जुहुयात् । समाप्ते वा सूतकेऽतीतहोमान् प्रायश्चित्तपूर्वकान् । न च होमत्रयातिपाते पुनराधानमिति वाच्यम् । वचनेन दशरात्रं होमातिपातेऽपि होमस्यैवोक्तत्वात् । तदेवं स्वयं होमाशक्तौ सपिण्डस्यान्यस्य च अभावे आकृष्योत्कृष्य वा होमः कार्य इति पक्षान्तरमुपादिश्यते इति न विरोधः ॥

## अथ स्मार्तहोमनिर्णयः ।

तत्र जाबालः—

जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते ।
शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥

जातूकर्णेऽपि—

सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

पिण्डयज्ञः पिण्डपितृयज्ञः । चरुः श्रवणाकर्माश्वयुज्यादिकः स्थालीपाकहोमश्च। होम औपासनहोमः। असगोत्रोऽसपिण्डः ।सपिण्डनिषेधस्याशौचानिमित्तत्वादाशौचरहितेन ब्रह्मचारिणासपिण्डेनापि होतव्यमिति गम्यते । कारयेदिति । विधिवत्स्मार्तकर्माणि त्यागमात्रे एव यजमानस्य शुद्धिर्नेतरत्र, तस्यानन्यनिष्पाद्यत्वात् । अत एव बृहस्पतिः—

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ॥

यद्गृह्येऽग्नौ हावयेदित्यनारभ्योक्तं तत्किंविषयमिति प्रश्नपूर्वकं तद्विषयमाह कात्यायनः—

हावयेदिति किं तत्स्यादनारभ्य विधानतः ।
सूतके च प्रवासे च स्वाशक्तौ श्राद्धभोजने ॥
एवमादिनिमित्तेषु हावयेदिति योजयेत् ॥

पारस्करस्तु स्मार्तकर्मणः पाक्षिकमनुष्ठानमाह—'शालाग्नौ चैके' इति । नित्यानि निवर्तेरन्निति निषेधस्य शालाग्नौ चैक इति पाक्षिकः प्रतिप्रसवः। तेन गृह्याग्निसाध्यवैकल्पिकमनुष्ठानम् । तत्रानुष्ठानपक्षे विशेषमाह—'अन्य एतानि कुर्युः' इति । अन्येऽसपिण्डाः कुर्युः अन्यैः कारयेदित्यर्थः । तदेतत्स्पष्टमेवाभिहितं पूर्ववाक्यैः । तेन स्मार्ताग्नौ स्वयं होमो न कर्तव्य इति तत्त्वम् । तदेतत्स्पष्टमाहाश्वलायनः,—

स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः । इति ।

अन्याभावे विशेषमाह स एव—

स्मार्ताग्निनाऽऽत्मनोऽन्येषामभावे सूतकादिषु ।
समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम् ॥ इति ।

आत्मनः सूतकादिषु सम्भावितेषु अन्येषां चाभावे सूतकात्प्रागेव समारोप्य सूतकान्ते विहृत्य प्रायश्चित्तपूर्वकमतीतहोमं कुर्यादित्यर्थः ॥

## अथ श्रौतहोमे द्रव्याणि ।

तत्र कात्यायनः-सूतक इत्युपक्रम्य—

होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैः ।

सम्वर्तोऽपि—

होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ।
पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोः ॥

तत्र-श्रौताग्नावित्यर्थः । शुष्कान्नं—व्रीहियवादि ।

## अथ स्मार्तहोमद्रव्याणि ।

तत्र कात्यायनः—

अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥

ब्रह्मचारिणं प्रत्याह कात्यायनः—

न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित् । इति ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ।

इत्युपक्रम्य—"सद्यः शौचं विधीयते"

इति याज्ञवल्क्येनाशौचाभावबोधनात् ॥ ( ३।१.२९ )

## अथ काम्येऽपि प्रतिप्रसवः ।

तत्र पुलस्त्यः—सद्यः शौचमित्यनुवृत्तौ—

सान्निहत्यमुपस्पृश्य राहुग्रस्ते दिवाकरे ।
सत्रधर्मप्रवृत्तस्य दानकर्मफलैषिणः ॥

अस्यार्थमाह पारिजातः-दानधर्मसाध्यफलकामस्यापि राहु-ग्रस्ते दिवाकरे सति सन्निहिततीर्थविशेषे स्नात्वा दाने प्रवृत्तस्य सद्यः शौचम् । तथा अन्नसत्रधर्मप्रवृत्तस्य तत्फलार्थिनोऽपि सद्यः शौचमिति ।

अङ्गिराः—

राज्यनाशस्तु येन स्याद्विना राज्ञः स्वमण्डले ।
प्रयास्यतश्च संग्रामे होमे प्रास्थानिके सति ॥

मन्त्रादितर्पणे चाऽपि प्रजानां शान्तिकर्मणि ।
गोमण्डलादौ वैश्यानां कृषिकालात्ययेष्वपि ॥
आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते ॥

अथ नैमित्तिकेऽपि क्वचित्प्रसवमाह

बृहस्पतिः—

कन्याविवाहे संक्रान्तौ मृतकं न कदाचन । इति ।

विवाहे पूर्वसम्भृतसम्भारे,

यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि ।

इति स्मृत्यन्तरात् ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥

इति वचनाच्च । यज्ञेऽपि पूर्वं [संभृत] संभार इत्येव पूर्ववाक्यानुरोधात् । विवाह इति चौलाद्युपलक्षणार्थम् । यज्ञ इति प्रतिष्ठाद्युत्सवमात्रोपलक्षणम् ।

पैठीनासिरपि—

विवाहोत्सवयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥ इति ।

विप्लवाभावेऽपि क्वचिद्देशविशेषेण शुद्धिरनेनोक्तेति विज्ञानेश्वरः ।

वृद्धवसिष्ठोऽपि—

चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति ॥

तथा मदनेऽपि—

मृतके सूतके चैव न दोषो राहुदर्शने ।
तावदेष भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥ इति ।

नित्यनैमित्तिककाम्येष्वनन्यगतिकेष्वपिक्वचित्प्रतिप्रसवमाह

जमदग्निः—

सूतके मृतके वाऽपि जाह्नव्या सलिलेति स्थः ।

नाभिमात्रे जले स्थित्वा कुर्याद् दानजपादिकम् ॥
नित्यं नैमित्तिकं काम्यमप्यनन्यगतिकमिति शेषः ।

तथा पुलस्त्योऽपि—

अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु ।
राहोर्दर्शनकाले च सूतकं नैव विद्यते ॥ इति ।

अम्बुमध्ये गवांगोष्ठे इति चावश्यकनित्यकाम्याभिप्रायेण, इतरत्सर्वमावश्यकनैमित्तिकाभिप्रायेण । अथान्येष्वपि केषुचित् केषांचित्प्रतिप्रसवः ।

तत्र याज्ञवल्क्यः—

महीपतीनां नाशौचं हतानां विद्युता तथा ।
गोब्राह्मणार्थे संग्रामे यस्य चेच्छति भूमिपः ॥(४।१।२७)

महीपतीनां यदसाधारण्येन विहितं प्रजापालनादि तदुपयोगिषु दानमानादिषु नाशौचं, नत्वन्यत्र । विद्युद्धतस्य, गोब्राह्मणरक्षार्थं मृतस्य च गोत्रिणां तन्मरणनिमित्तं नाशौचम् । यस्य च पुरोहितमन्त्र्यादि शान्तिकादिमन्त्राद्यर्थं राजा इच्छति तस्य च नाशौचम् ।

मनुः—

राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते ।
प्रजानां परिरक्षार्थं तदेवात्रैव कारणम्(१) ॥ (५।९४)

गौतमोऽपि "राज्ञां च कार्याविघातार्थम्" इति । आशौचाभाव इति शेषः । अन्येषामप्याशौचाभावमाह प्रचेताः—

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥

शातातपः—

मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च ।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः ॥

(१) आसनं चात्र कारणम् इति मनुस्मृतौ पाठः ।

स्मृत्यन्तरे—

सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः।

तथा—

चिकित्सको यत्कुरुते तदन्येन न शक्यते।

तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः॥

याज्ञवल्क्यः—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्।

सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा॥

दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे।

आपद्यपि च कष्टायां सद्यः शौचं विधीयते॥ (या.३।२९)

माधवीये—

नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु।

प्रवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने॥

गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्।

प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा॥ इति।

कौर्मे ब्रह्मपुराणे—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः।

पश्चाद्दशाहे पतिते न भवेदिति निश्चयः॥

तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे।

स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते॥

नैष्ठिकस्याऽथवाऽन्यस्य भिक्षार्थं प्रस्थितस्य च।

वानप्रस्थस्य वाऽन्यस्य साधिकारस्य सर्वदा॥

प्रतिग्रहाधिकारश्च न प्रवृत्तस्य विद्यते।

गोमङ्गलादौ वैश्यानां रक्षाकालात्ययेष्वपि॥

अथ दातृगृहीत्रो सूतके मृतकेऽथवा।

अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन।

विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात्॥

भोजनार्थे तु सम्भुक्ते विप्रैर्दातुर्विपद्यते ।
यदा कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहितः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः ॥

क्रतुः--

पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥ इति ।

जाबालः—

ब्रह्मचारिणि भूपे च यतौ शिल्पिनि दीक्षिते ।
यज्ञे विवाहे सत्रे च सूतकं न कदाचन ॥ इति ।

अत्र च सर्वेष्वपि वाक्येषु तत्तत्कर्मनिमित्तैः शब्दैस्तत्तत्कर्मणामसाधारणेनोपस्थितत्वात्तत्रैवाशौचाभावोऽवगन्तव्यो न सर्वत्र। अत एव विष्णुस्तत्तत्कर्मपुरस्कारेणैवाशौचाभावं दर्शयति-'न राज्ञः कर्माणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्माणि' इति । एवमन्यत्राऽप्यूहनीयम् । इत्याशौचे विहितनिषिद्धकर्माणि ॥

## अथ अशौचान्तदिनकृत्यम् ।

ब्रह्मपुराणे—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पाश्चिमं त्वहः ।
तत्र वस्त्रविशुद्धिं च गृहशुद्धिं च कारयेत् ॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम् ।
ग्रामाद् बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी ॥
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च ।
श्मश्रुलोमनखानां च यस्त्याज्यं तज्जहात्यपि ॥
गौरसर्षपकल्केन तिलतैलेन संयुतः ।
शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ॥
वासोयुगं नवं शुक्लमव्रणं शुद्धमेव च ।

गृहीत्वा गां सुवर्णं च मङ्गलानि शुभानि च ॥
स्पृष्ट्वा सङ्कीर्तयित्वा च पश्चाच्छुद्धो भवेन्नरः ।

पाश्चिममशौचान्तं गृहशुद्धिर्लेपनं पूर्वभाण्डत्यागश्च । श्मश्रुलोमेति । एतच्चाशौचान्ते वपनमाशौचनिवृत्त्यर्थम् ।

देवलः—

दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥

बृहस्पतिः--

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि च ।
नवमे वाससां त्यागो नखलोम्नां तथाऽन्तिमे ॥ इति

मार्कण्डेयः—

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनादिकम् ।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ॥

## अथ क्षौरकर्म ।

तच्च सर्वेषामपि पुत्राणां प्रथमेऽह्न्यावश्यकम् ।

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधाने सोमयागे च वपनं सप्तसु स्मृतम् ॥

इति परिशिष्टात् । गुरुर्मन्त्रोपदेष्टा । अत्र पक्षान्तरमाह देवलः-

क्रियां च कुरुते यस्तु तद्दिने तस्य मुण्डनम् ।
लघीयसां दशाहे तु पुत्राणां वपनं स्मृतम् ॥ इति ।

आपस्तम्बः--'अनुभाविनां च परिवापनम्' इति । अस्यायमर्थः—शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डास्तेषां तथा अनु पश्चाद्भवन्ति इत्यनुभाविनोऽल्पवयसस्तेषाम् । अनुभाविनः पुत्रा एवेत्येके । अत्र यद्यपि—

वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।

इत्यादिवाक्यैर्गर्भिणीपतेर्वपनं निषिद्धं तथाऽपि पित्रादीनां केषाचिन्मरणे गर्भिणीपतिरपि वापयेदेव ।

तदुक्तं बृहन्मनुना ज्योतिर्निबन्धे—

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रोः प्रेतविधानं च न दोषस्तत्र विद्यते ॥
माता पिता तयोर्भ्राता श्वशुरोऽग्रयो गुरुर्मृतौ ।
एषां स्त्रीणां भगिन्याश्च गर्भवानपि वापयेत् ॥ इति ।

स्त्रीणां गर्भवानपि गर्भिणीपतिरपि एषां पित्रादीनां मृतौ वापयेदित्यर्थः ।

सूतके मृतके क्षौरं न कुर्याद्दशमेऽन्हि यः ।
तस्याशौचं भवेन्नित्यं पितरो नरके स्थिताः ॥

इतिसङ्ग्रहे दोषश्रवणात् । मृतके मरणनिमित्ते सूतक इत्यर्थः । यद्वा सूतकेऽपि श्मश्र्वादेः क्षौरमस्त्येव । यत्तु—

द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः ॥

इत्यनेकपक्षोत्कीर्तनं तत्पूर्वपूर्वासम्भवविषयम् ।

तथाच बौधायनः—

अनुप्तकेशो यः पूर्वं सोऽत्र केशान् प्रवापयेत् ।
द्वितीयेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ॥
यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम् ॥ इति ।

पूर्वं प्रथमदिन इत्यर्थः । प्रेतपत्न्या त्वाशौचान्ते मुण्डनं कार्यमिति व्यासः—

पुत्रः पत्नी च वपनं कुर्यादन्त्ये यथाविधि ।
पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः ॥

अन्त्ये—आशौचान्तदिन इत्यर्थः । विष्णुस्तु—पक्षान्तरमाह— 'द्वादशाहश्राद्धं कृत्वा त्रयोदशेऽन्हि वा कुर्यात्' इति ॥

### अथ त्रैवर्णिकस्यप्रमादाच्छिखानाशे काठक-गृह्यपरिशिष्टे विधिरुक्तः—

"शिखावर्जं वपनं, प्रमादात्तद्वपने कौशीं शिखां ब्रह्मग्रन्थि युतां दक्षिणकर्णे निदध्यादेष विधिः शिखानाशे" इति । अत्र पुनःसंस्कारोऽप्युक्तः सङ्ग्रहे—

शिखां छिन्दन्ति ये मोहाद् द्वेषादज्ञानतोऽपि वा ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ इति ।

### अथोत्तरीयादिविपर्यये निर्णयः ।

तत्र बौधायनः—

उत्तरीय-शिलापात्र-कर्तृ-द्रव्य-विपर्यये ।
पिण्डोदकं नवश्राद्धं पुनः कार्यं यथाविधि ॥

पारस्करः—

गृहीत्वा प्रेतपाषाणं गच्छेद्देशविपर्यये ।
अपकृष्यापि कुर्वीत न त्वेतदवशेषयेत् ॥
उदकं पिण्डदानं च दशाहाभ्यन्तरे यदि ।
अतिक्रमेद्दशाहान्तं सर्वं पूर्ववदाचरेत् ॥

त्रिकाण्डमण्डनः—

शिला विनाशोपहता यदाऽन्यमायातुमन्त्रेण निधाय दर्भे ।
यमाय सोमं सुनुतेति मन्त्रैः स्रुवेण हुत्वा त्रिभिराज्यमग्नौ ॥
नष्टं यदि स्यात्पुनरेव दृष्टं दत्त्वाऽञ्जलीनेव विधिक्रमेण ।
यमे इत्येवेत्यश्मयुगं प्रयुज्य तत्रैव सर्वं विधेयम् ॥

व्यासः—

श्वशूकरशृगालाद्यैर्ग्रामकुक्कुटकैरपि ।
चाण्डलकरभैः पिण्डसंस्पर्शे तु प्रमादतः ॥
कृच्छ्रत्रयं चरेत्पिण्डमिति व्यासोऽब्रवीन्मुनिः ॥

अथ दशाहान्तर्दर्शपाते निर्णयः ॥

तत्र भविष्यत्पुराणम्—

प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत् ॥

आशौचसमाप्तिं यावदित्यर्थः । ऋष्यशृङ्गः—

आशौचमन्तरादर्शो यदि स्यात्सर्ववर्णिनाम् ।
समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः ॥

पैठीनसिः—

आद्यैन्दवे च कर्तव्या प्रेतपिण्डोदकक्रिया ।
द्विरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ॥

द्विरैन्दवे-क्षयिष्णु-वर्धिष्णु-चन्द्रद्वयमध्ये । धर्मतत्त्वालोकेऽपि

त्रयोदशी कलामात्रा तिथौ यस्य मृतेर्भवेत् ।
नातिक्रम्य सिनीवालीं कुर्यात्तस्योदकक्रियाम् ॥
चतुर्दशीक्षणमृतस्ततः प्राप्नोत्यमातिथिम् ।
तिलोदकं तथा पिण्डाः समाप्या दशमेऽहनि ॥
एकादशेऽहनि श्राद्धं कुर्यादित्यङ्गिरोवचः ।

सङ्ग्रहेऽपि—

दर्शः संक्रमणं पातो दशाहान्तर्यदा भवेत् ।
तावत्तेवोत्तरं तन्त्रं समाप्यमिति केचन ॥

पितृविषये विशेषमाह गौतमः—

अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डं जलाञ्जलीन् ॥

प्रयोगसारेऽपि—

दशाहमध्ये दर्शश्चेत्पातः संक्रान्तिरेव च ।
मातापित्रोर्विनाऽन्येषां स दशाहं समापतेत् ॥

एतच्च त्र्यहात्पूर्वं दर्शपाते सति द्रष्टव्यम् । त्र्यहानन्तरं दर्शपाते पित्रोरपि सर्वं तन्त्रं समापनीयमिति केचित्,

पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।
तावतैवोत्तरं तन्त्रं पर्यवस्येत्त्र्यहात्परम् ॥

इति गालववचनात् ।

दशाहमध्ये दर्शश्चेदूर्द्धं तन्त्रं समापयेत् ।
त्रिरात्रादुत्तरं पित्रोः समाप्यमिति निर्णयः ॥

इति वचनादितिसिद्धान्तः, अन्येतु गालववचनं पित्राशौचेऽपि दर्शपाते समाप्तिरुत्तरतन्त्रस्योचिता, किमुतान्याशौचमध्य इति कैमुतिकन्यायपरम् । तेन पितृव्यतिरिक्तविषये उत्तरतन्त्रसमाप्तिमात्रप्रदर्शकं न पितृविषयेऽपि नियामकम् । यद्वा, क्षेत्रजदत्तकपुत्रयोर्बीजिप्रतिगृहीतृपितृविषयं गालववचनम् । औरसपुत्रिकापुत्रयोर्मातापितृविषयं च गौतमवचनम् । यद्वा, सर्वेषां सर्वत्रापदनापत्कल्पाश्रयणेन वचनद्वयं च वाऽवस्थाप्यमिति वर्णयन्ति ॥

## अथ दशाहान्तराशौचान्तरसन्निपाते निर्णयः ।

तत्र शातातपः—

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः ॥
प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् ।
तथैवाशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि ॥ इति ।

गालवो–पि—

शावे तु सूतकं चेत्स्यान्निशाशेषे तथैव च ।
नवश्राद्धानि देयानि यथाकालं यथाविधि ॥ इति ।

तथा शावाशौचयोः सन्निपातेऽपि प्रेतकृत्यं कार्यं, तुल्यन्यायत्वादिति हारमिताक्षरयोरर्थः ॥

## अथैकादशाहकृत्यम् ।

तत्रैकोद्दिष्टं कार्यम् । तथाच विष्णुः—"अथाशौचापगमे सुस्नातः सुप्रक्षालितपाणिपादस्त्वाचान्तस्त्वेवं विधाने च ब्रा-

ह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत् । एकवन्मन्त्रानूहदेवैकोद्दिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाऽभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताऽक्षय्योदकेषु चतुरङ्गुल पृथ्वीस्तावदन्तरालास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात्, कर्षूसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात् । सोमाय पितृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधा नमः, यमायाङ्गिरसे स्वधा नमः । स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं कुर्यात्ततो मधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत् । एवं मृताहे प्रतिमासं कुर्यात्" इति ।

कात्यायनोऽपि—अथैकोद्दिष्टमेकपात्रमेकोऽर्घ्य एकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञानमुपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गेऽभिरताः स्मइत्यपरे' इति ।

याज्ञवल्क्योऽपि—

एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥ (१।२५१)
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥ इति ।
(१।२५२)

चतुर्विंशतिमतेऽपि—

एकोद्दिष्टे पिण्डमेकं विकिरं च न कारयेत् ।

शातातपः—

एकोद्दिष्टं च यच्छ्राद्धं नैमित्तिकमिहोच्यते ।
तदप्यदैवं कर्तव्यमयुग्मानाशयेद् द्विजान् ॥

इदमेकोद्दिष्टं ब्राह्मणस्यैकादशाहे, अन्येषामाशौचान्तदिन एव । यत्तु—'आद्यमेकादशेऽहनि' इति याज्ञवल्क्यवचनं, तदा-

शौचान्तोपलक्षणम् । 'अथाशौचापगमे' इति विष्णुवचनादिति कल्पतरुः । मदनस्तु 'आद्यमेकादशेऽहनि' इत्यत्राद्योद्देशेनैकादशाहरूपकालविधानात्तस्य वाऽऽशौचापगम इति विष्णुवचनं ब्राह्मणविषयम् । तेन क्षत्रियादीनामपि आद्यश्राद्धमेकादशाह एवेति । तथाच वृद्धवसिष्ठः—

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानामाशौचं च पृथक् पृथक् ॥

शङ्खलौगाक्षी अपि—

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति ।

यत्तु मत्स्यपुराणे--

एकादशेऽहनि तथा विप्रानेकादशैव तु ।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥ इति ।

तत्प्रेततृप्त्यर्थमेकादशब्राह्मणभोजनरूपं रुद्रगणाख्यं-श्राद्धान्तरं, नत्वाद्यं षोडशान्तर्गतमिति । विज्ञानेश्वरोऽप्येवमेवाह । अत्रेदं चिन्त्यम्--चतुर्णामपि वर्णानां यावदाशौचं पिण्डदानमवगम्यते । तदुक्तं विष्णुना--'यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः' इति । तथा ब्राह्मणादीनां चतुर्णामपि दश द्वादश पञ्चदश त्रिंशत्पिण्डा इत्युक्तं पारस्करेण--

ब्राह्मणे दश पिण्डा स्युः क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः ॥ इति ।

तथा वर्णविशेषेण दशपिण्डपक्षेऽपि दशमपिण्डस्योत्कर्षः प्रतिपादितो ब्रह्मपुराणे-

देयस्तु दशमः पिण्डो राज्ञा वै द्वादशेऽहनि ।
वैश्यानां(१) पञ्चदशमे देयस्तु दशमस्तथा ॥
शूद्राणां दशमः पिण्डो मास पूर्णे विधीयते ॥

(१) वैश्यानां वै पञ्चदशे' इति सिन्धुपाठः ।

तथा प्रचेताः—

पिण्डः शूद्राय दातव्यो दिनान्यष्टौ नवाथवा ।
सम्पूर्णे तु ततो मासे पिण्डशेषं समापयेत् ॥

इत्यादिवाक्यैर्यावदाशौचं पिण्डदानासमाप्त्यवगमात्कथमवयवपिण्डासमाप्तावेकादशाहिकश्राद्धविधिरिति । तस्मादत्रैवं व्याख्येयम्—क्षत्रियादीनां यावदाशौचं पिण्डदानं मुख्यः कल्पः । दशमपिण्डोत्कर्षपक्षो मध्यमः । दशरात्रमेव दशपिण्डदानं गौणः पक्ष इत्युक्तं प्राक् । तत्र प्रथमद्वितीयपक्षयोराशौचान्त एव एकादशाहिकश्राद्धविधानाद् 'अथाशौचापगमे' इति विष्णुवाक्यमर्थवत् ।

आशौचान्ते ततः सम्यक्पिण्डदानं समाप्यते ।
ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः ॥

इति मरीचिवचनेनैकमूलत्वात् । नच वैष्णवं ब्राह्मणविषयं न क्षत्रियादिविषयमिति वाच्यम्, 'सर्ववर्णेषु' इति वचनाविरोधात् । 'एकदशेऽह्नि यच्छ्राद्धम्' इति वृद्धवसिष्ठवचनम्, 'आद्यंश्राद्धमशुद्धोऽपि' इति शङ्खलौगाक्षिवचनं च दशरात्रमेव दशपिण्डदानमित्यस्मिन् तृतीये पक्षेऽर्थवद्भविष्यतीति न कस्यापि विरोधः । एवं चाऽशौचान्ते सपिण्डीकरणमपि घटते ।

यदाह कात्यायनः—

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम् । इति ।

वृद्धमनुरपि—

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभृताम् ।
वैश्यानां च त्रिपक्षादावथवा स्यात्सपिण्डनम् ॥ इति ।

तदेतत्सर्वं क्रमप्राप्तमग्रे दर्शयिष्यामः । न चैवं 'न विधौ परः शब्दार्थः' इति न्यायविरोधः । वचनान्न्यायस्य दुर्बलत्वादित्यास्तां तावत् । आहिताग्नेस्तु दाहादेकादशाहे, न तु मरणादित्याह कात्यायनः—

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।

ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥ इति ।

ध्रुवाणि त्रैपक्षिकादूर्ध्वानि ।

अत एव जातूकर्ण्यः—

ऊर्द्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥

शङ्खोऽपि—

मरणादेव कर्तव्यं संयोगो यस्य नाग्निना ।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥ इति ।

अशौचमिति क्रियोपलक्षणम् । अग्निना—श्रौतेन, तेन न स्मार्ताग्नेर्निरग्नेश्च परिग्रहः ।

अथ येषां सद्यःशौचं तेषामपि आद्यमेकादशाह एवेत्याह शङ्खः-

सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

एतच्चानतिक्रान्तदशाहस्य, अतिक्रान्तविषये तु सद्य एवेति चिन्तामणिः । त्र्यहाशौचेऽप्येकादशाह एवेत्याहोशनाः—

त्र्यहाशौचेऽपि कर्तव्यमाद्यमेकादशेऽहनि ।
अतीतविषये सद्यस्त्र्यहादूर्ध्वं तदिष्यते ॥ इति ।

अतिक्रान्तविषये सद्यःशौचे सद्यः, त्र्यहाशौचे त्र्यहाद्यनन्तरमिति व्यवस्था । प्राच्यास्तु-सद्यस्कालिक-एकाहिक-त्र्यहाद्याशौचपक्षेऽपि आशौचान्त एव श्राद्धमाहुः, विष्णुवाक्यानुरोधात् । संन्यासिनां त्वेकादशाहे पार्वणमेव नत्वेकोद्दिष्टमित्याहोशनाः—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ॥
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ इति ।

अथ यथाकथंचिदेकोदिष्टविध्यसम्भवेविधिरुक्तः प्रयोगसागरे—

एकोद्दिष्टे तु सम्प्राप्ते त्वभावे द्रव्यविप्रयोः ।
ग्रामाद्बहिः शुचौ देशे गोमयेनोपलिप्य च ॥

व्याहृत्याऽग्निं प्रतिष्ठाप्य तत्र होमं समाचरेत् ॥ इति ।

अत्र होमपक्षेऽपि पुनर्ब्राह्मणभोजनं कार्यमित्याह गोभिलः—

ब्राह्मणं भोजयेदाद्ये होतव्यमथवाऽनले ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

एतदेकोद्दिष्टाकरणे संस्कर्तुर्नाशौचनिवृत्तिरित्याह बौधायनः—

एकोद्दिष्टान्त एवायं संस्कर्ता मुच्यते त्वघात् ॥ इति ।

## अथ प्रेतश्राद्धधर्माः ।

गृह्यपरिशिष्टे—

प्रेतश्राद्धेषु धर्मेषु न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम् ॥
एकोद्दिष्टस्य पिण्डे तु अत्रशब्दो न युज्यते ।
पितृशब्दं च कुर्वीत पितृहा चोपजायते ॥
अनूदकमधूपं च गन्धपाद्यविवर्जितम् ।
नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ॥

न स्वधेति स्वधावाचनं नेत्यर्थः । न तु स्वधापदप्रयोगनिषेधः । 'स्वधोच्यतामिति वाचं विसृजेत्'इत्याश्वलायनोक्तेः । अत्रशब्दो अत्र पितरो मादयध्वम् इति मन्त्रोपलक्षणार्थः । अनूदकमनर्घ्यम् । पिण्डोदकम् अवनेजनम् ।

प्रयोगसारे—

एकोद्दिष्टे पिण्डमेकं त्रिकिरं तु न कारयेत् ।
न पूर्वावेदनं कुर्यान्न धूपं न प्रदीपनम् ॥
न चाऽभिश्रवणं कुर्यान्नाग्नौकरणमिष्यते ।

प्रेतश्राद्धे न विकिर इति स्मृतिरत्नावल्यामपि । सापिण्डीकरणप्राक्कालीनैकोद्दिष्टविषयमेतदिति श्राद्धकल्पचिन्तामणिप्रभृतयः । यथाशाखं व्यवस्थेत्यन्ये ।

प्रचेताः—

न पात्रमालभ्य जपन्ति नाशिषः प्रार्थयेदिति ।

संश्रवग्रहणं चैव न्युब्जीकरणमेव च ॥

हारीतोऽपि--

नाशिषः प्रतिगृह्णन्ति नान्नं विकिरेन्न स्वधा निनयेत् पित्र्यमन्त्रवर्जं जपः । तथा--

नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत् ।
दम्पत्योर्भुक्तशेषं च तन्न भुञ्जीत कर्हिचित् ॥

स्मृत्यन्तरेऽपि--

आशिषो द्विगुणा दर्भा जपाशीःस्वस्तिवाचनम्
पितृशब्दः स्वसम्बन्धः शर्मशब्दस्तथैव च ॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।
अष्टादश पदार्थांश्च प्रेतश्राद्धे विवर्जयेत् ॥
सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ॥
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ॥

धर्मप्रदीपे—प्रकारान्तरेणाष्टादश वस्तुनि निषिद्धानि, तानि प्राग्दर्शितानि ।

अथैकादशाह एव कृत्यान्तरमाह

बृहस्पतिः—

वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

सत्यव्रतः—'दशम्यामतीतायामेकैकं तमुद्दिश्य भोजयेत्तेषामेकस्मिन् गुणवते शय्या देया, तथा वासोहिरण्यदास्युपानच्छत्रोदकुम्भदक्षिणाप्रदानं, ततः स्वस्त्ययनादिधर्माः प्रवर्तन्त' इति ।

मत्स्यपुराणेऽपि—

आशौचान्ताद् द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् ॥
वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा ।

## अथ वृषोत्सर्गः ।

तत्र बृहस्पतिः—

एकादशेऽह्नि सम्प्राप्ते यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

तल्लक्षणमाह शौनकः—

उत्सृजेल्लक्षणैर्युक्तं देवपित्रादितृप्तये ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ॥
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ।

लक्षणान्तरमप्युक्तं ग्रन्थान्तरे—

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षया समवर्णश्च स नीलो वृष उच्यते ॥

नीलं बभ्रुं कपिलं कृष्णं पिङ्गलं लोहितं जीवद्वत्सायाः पयस्विन्याः पुत्रं द्विहायनमेकहायनं वोत्सृजेदिति प्रयोगसारः । यथोक्तवृषाभावे प्रतिनिधिरपि कार्य इत्युक्तं संग्रहे—

एकादशेऽह्नि संप्राप्ते वृषाभावो भवेद्यदि ।
दर्भैः पिष्टैश्च सम्पाद्य तं वृषं मोचयद् बुधः ॥

चशब्दो वाऽर्थे । दर्भैर्वा पिष्टैर्वेति विकल्पः । तदुक्तं तत्रैव—

वृषोत्सर्जनवेलायां वृषाभावः कथञ्चन ।
मृत्तिकाभिस्तु दर्भैर्वा वृषं कृत्वा विमोचयेत् ॥

प्रकारान्तरमप्युक्तं तत्रैव—

न शक्यते वृषोत्सर्गो होमं तत्र तु कारयेत् ।
न करोति यदा होमं तदन्नं पूयशोणितम् ॥ इति ।

होमं वृषोत्सर्गाङ्गहोममात्रं कुर्यादित्यर्थः । वत्सतरीसंख्योक्ता शौनकेन—

षोडश द्वादशाष्टौ वा चतस्रोऽप्यथ वैकिका ।
सम्वत्सराधिकाः कार्या वत्सतर्यः फलेप्सुभिः ॥

शक्त्यपेक्षया व्यवस्थैषां ज्ञेया । पुत्रवत्या भर्तृसमक्षं मृताया वृषोत्सर्गो न कार्योऽपि त्वेका गौर्देयेत्युक्तं विद्याकरेण--

यदि पुत्रवती नारी भर्तुरग्रे म्रियेत हि ।
वृषोत्सर्गो न कर्तव्यो गौरेका तु प्रदीयते ॥

संग्रहेऽपि--

अपि पुत्रवती नारी भर्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्वीत गां तु दद्यात्पयस्विनीम् ॥ इति ।

अत्र केचित् भर्तृसमक्षं मृताया वृषोत्सर्गाद्यधिकारिणि पुत्रे विद्यमानेऽपि यदि वृषोत्सर्गो नास्ति तर्हि तदभावे सुतरां नास्तीत्यपिशब्दार्थः । तेन भर्तृसमक्षमरणमात्रस्यैव वृषोत्सर्गाभावे निमित्तता न तु विशिष्टस्येत्याहुः । अत एव विधानमालायाम्--

पतिमत्स्त्रीक्षयेऽनड्वान्नोत्सृज्यो बुद्धिमन्नरैः ।
स प्रेतत्वहरो यस्मान्नास्ति तत्पतिमत्स्त्रियाः ॥ इति ।

## अथ षोडशश्राद्धानि ।

तत्र जातूकर्ण्यः--

द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥

अत्राऽऽद्यषाण्मासिकाब्दिकशब्दैरूनमासिकोनषाण्मासिकोनाब्दिकान्यपि गृह्यन्ते । व्यासोऽपि--

द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके ।
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः ॥

अत्र द्वादशाहे ऊनमासिकमेव न श्राद्धान्तरम् । अत एव तस्य कालद्वयमाह गोभिलः--

मरणाद् द्वादशाहे स्यान्मास्यूने चोनमासिकम् । इति ।

ब्रह्मपुराणे तु प्रकारान्तरेणोक्तानि--

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।

चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥

ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया ।

कर्तव्याः श्रुतितस्तेषां तत्र विप्रांस्तु तर्प्पयेत् ॥ इति ।

दशाहान्तर्गतचतुर्थादिदिनकर्तव्यश्राद्धान्यादाय षोडश-संख्या पूरिता, न तूनमासिकाद्यन्तर्भावेनेति । तेन विकल्पोऽयं शाखाभेदेन व्यवस्थितो द्रष्टव्य इति । यदा तु वर्षमध्येऽधिकमासस्तदा सप्तदशं भवति ।

तदाह लौगाक्षिः—

आद्यमेकादशे कार्यमधिके वाऽधिकं भवेत् ।

अधिके मलमासे, अधिकं सप्तदशमित्यर्थः । तथा यमः—

गर्भे वार्धुषिके भृत्ये श्राद्धकर्माणि मासिके ।

सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् ॥

बृहस्पतिः—

श्राद्धं नैमित्तिकं कुर्यात्प्रयतः सन्मलिम्लुचे ।

तीर्थश्राद्धं गजच्छाया-प्रेत-श्राद्धं तथैव च ॥

प्रेतश्राद्धं-नवश्राद्धं मासिकश्राद्धं च, तस्यापि प्रेतत्वनिवर्तकत्वात् ।

प्रजापतिः—

सूर्येण लङ्घितो मासो न कर्मणि स्मृतो बुधैः ।

तस्मात्तत्र न कर्तव्यं श्राद्धं नैमित्तिकादृते ॥

नैमित्तिकम्—पुत्रजन्म गजच्छाया चन्द्रसूर्योपरागनिमित्तम्, तथा नवश्राद्धं सपिण्डनं च, तेषामपि निमित्तवशेनैव क्रियमाणत्वादिति श्राद्धकल्पः ।

द्वौ मासावेकनामानौ स्यातां सम्वत्सरे यदि ।

उत्तरे देवकार्याणि पितृकार्याणि वोभयोः ॥

तथा—

पिण्डवर्जमसंक्रान्ते संक्रान्ते पिण्डसंयुतम् ।

श्राद्धद्वयं प्रकुर्वीत मलमासो यदा भवेत् ॥

इति ज्योतिःपराशरनारदवचनाभ्यां मासद्वयेऽपि मासिकं कार्यमिति तत्रैव निर्णीतम् । ऋष्यशृङ्गस्तु मलमासे मासिकं निषेधति--

सम्वत्सरातिरेको वै मासश्चैव त्रयोदशः ।
तस्मात्त्रयोदशं श्राद्धं न कुर्यान्नोपतिष्ठते ॥ इति ।

तदेवं विहितप्रतिषिद्धत्वाद्विकल्प एवेति श्राद्धकल्पः । ऊनमासिकादीनां कालमाह गोभिलः--

मरणाद्द्वादशाहे स्यान्मास्यूने चोनमासिकम् ।

गालवः--

ऊनषाण्मासिकं षष्ठे मास्यूनेऽप्यूनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा ॥ इति ।

द्वादशाहे ऊनमासिकमूनाब्दिकं च । तेन यथासम्भवं व्यवस्था ।

अत्र विशेषमाह गार्ग्यः--

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

मरीचिः--

द्विपुष्करे च नन्दायां सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यां च नो तानि कृत्तिकासु त्रिपुष्करे ॥ इति ।

ऊनमासिकादीनि कियद्भिर्दिवसैरूने मासादौ कार्याणीत्याह गौतमः--

एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥

गालवः--

त्रिभिर्वा दिवसैरूने त्वेकेन दिवसेन वा ।
आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम् ॥

कार्ष्णाजिनिः—

ऊनान्यूनेषु मासेषु विषमाहे समेऽपि वा ।
त्रैपक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु ॥

जातूकर्ण्यः—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः, सम्वत्सरश्चैव स्यातां षाण्मासिके तदा ॥

अत्रोनमासिकोनषाण्मासिकोनाब्दिकानि यथाक्रममेकद्वित्रिदिनैरूने मासादौ कार्याणीति प्राञ्चः सर्ववाक्यार्थमाचक्षते। नव्यास्तूनमासिकादीनि त्र्यहैकादिनैरूने मासादौ कार्याणीत्याहुः। तदेवं व्याख्याविप्रतिपत्तौ देशकालादिवशेन व्यवस्थेति तत्त्वम्। अत्र षोडशश्राद्धानां मध्ये "आद्यमेकादशेऽहनि" इति विशेषविधानादाद्यमासिकमेकादशेऽह्नि कृत्वा द्वितीयादिमासेषु आद्यमरणतिथौ द्वितीयादिमासिकानि कार्याणि ।

तदुक्तं प्रयोगसारे—

मासिकानि च शेषाणि मासानां प्रथमे दिने ॥ इति ।
मासादौ मासिकं कार्यमाब्दिके वत्सरे गते ।
आद्यमेकादशे कार्यमधिकं चाधिके भवेत् ॥

इति लौगाक्षिस्मरणाच्च। ये तु मासान्ते मासिकमाहुस्तेषां यावत् सम्वत्सरं मरणतिथौ क्रियमाणानि एकादशैव सम्पद्येरन्। तथा च षोडशसंख्याबाधः ।

अथत्रयोदशं मासमादाय द्वादशं क्रियते, तदा—
मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ॥
इति वर्षपर्यन्तकर्तव्यता स्मरणविरोधः ।
तेन मासादावेव मासिकमिति बहवो वदन्ति ॥

एतेषामकरणे दोषो भविष्यत्पुराणे—

अकृत्वा षोडशैतानि कृत्वा वर्षशतं पुनः ।

न मुच्यते तु प्रेतत्वाद्यथाऽऽह भगवान् शिवः ॥

यमोऽपि—

यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश ।
पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि ॥ इति ।

एषां कालमाह पैठीनसिः—

मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा । इति

वर्षान्तसपिण्डीकरणपक्षे स्वस्वकालो द्वादशाहसपिण्डीकरणपक्षे द्वादशाह एवेति व्यवस्था ।

श्राद्धकल्पेऽपि—

श्राद्धं सम्वत्सरं कुर्यादथवाऽप्यर्थवत्सरम् ।
द्वादशाहेऽथवा सर्वं सङ्क्षेपेण समाचरेत् ॥

ऋष्यशृङ्गोऽपि—

मुख्यं श्राद्धं मासि मासि सुपर्याप्तं मृतं प्रति ।
द्वादशाहे ऽथवा कुर्यादेकाहे द्वादशेऽपि वा ॥

अयमर्थः—द्वादशाहे सपिण्डनपक्षे द्वादशाह एव तानि कृत्वा सपिण्डनं कार्यम् । यदा तु साग्निकस्य कर्त्तुरेकादशादिने दर्शो भवति, तदा एकाहे एकादशाहे तानि कृत्वा सपिण्डनं कार्यम् । यदा तु त्रिपक्षादौ सपिण्डनं, तदाऽपि द्वादशाह एव तानि कार्याणि । वर्षान्तसापिण्डने यथाकालमेवेति ।

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।

इत्यत्र क्त्वाप्रत्ययेनाऽव्यवहितपूर्वकालताबोधनादिति प्राच्याः । तान्येतानि अर्वाक् सपिण्डीकरणपक्षे सर्वाण्यपकृष्य कृत्वा पश्चात्सपिण्डीकरणं कार्यम् ।

तदाह गोभिलः—

श्राद्धानि षोडशादत्वा नैव कुर्यात्सपिण्डताम् ।

लौगाक्षिरपि—

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।

पैठीनसिरपि--

सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश। इति।

एवं सपिण्डनात्प्रागपकृष्य कृतान्यपि तानि कृते सपिण्डने पुनर्यथाकालं कार्याणि।

तदाहाङ्गिराः--

यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं कृतम्।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्॥

हारीतोऽपि--

प्रेतसंस्कारकार्याणि यानि श्राद्धानि षोडश।
यथाकालं तु कार्याणि नान्यथा मुच्यते हि सः॥

पैठीनसिः--

नवश्राद्धमतिक्रम्य मृतेऽहनि तु मासिकम्।
प्रेतमुद्दिश्य मन्त्रैस्तु वत्सरं निर्वपेत्सुतः॥

अतिक्रम्य समाप्येत्यर्थः। तानि च सपिण्डनात्प्राक् एकोद्दिष्टविधिना कार्याणि।

तदुक्तं पैठीनसिना—

सपिण्डीकरणादर्वाक्कुर्वन् श्राद्धानि षोडश।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥
मासि श्राद्ध त्रिपक्षं च षण्मासं च नवानि च।
अर्वाक् सपिण्डीकरणादेकोद्दिष्टं प्रचक्षते॥

इति वृद्धवासिष्ठस्मरणाच्च। सपिण्डनोत्तरकालमेकोद्दिष्टपार्वणयोर्विकल्पमाह पैठीनसिः—

सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि॥ इति।

कात्यायनोऽपि--

सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम्।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः॥

एकोद्दिष्टविधानेन सपिण्डनादूर्ध्वं मासिकं न दद्यात्। शौनकमते त्वेकोद्दिष्टविधानेनापि दद्यादित्यर्थः। तेन विकल्पः। यदा तु मासिकान्यपकृष्य सपिण्डने कृते पुनर्यथाकालं क्रियमाणेषु मध्ये सम्वत्सरं वृद्धिरापतति तदा पुनरप्यपकृष्यकार्याणि।

तदाह शाट्यायनिः—

सपिण्डिकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरानिषेधनात् ॥
प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं यदि ॥

वृद्ध्युत्तरकालं च निषेधति कात्यायनः—

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् ।
अयातयामं मरणं न भवेत्पुनरस्य तु ॥

तथा सति अयातयामं नूतनं मरणं न स्यात्। यदि वृद्ध्युत्तरमपि तानि कुर्यात्तथा सति नूतनमेव मरणं भवेदिति भावः। सचायं निषेधः सर्वेषां सपिण्डानां, न केवलं कर्तुरेव।

तदुक्तं धर्मप्रदीपे—

विवाहोपनयादूर्ध्वं वर्षं वर्षार्द्धमेव वा ।
पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणं विना ॥ इति ।

सपिण्डीकरणातिरिक्तानां सर्वपिण्डदानानां निषिद्धत्वान्मासिकानां च सपिण्डत्वनियमाद् वृद्ध्युत्तरं सपिण्डैर्मासिकानि न कार्याणीत्यर्थोऽवगम्यते। सपिण्डाश्चात्राऽऽचतुर्थाः—

प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे तु शुभं भवेत् ॥

इति मेधातिथिस्मरणात्। एषां चापकर्षो वृद्धिनिमित्तक एव नान्यथा,

अन्तरेण तु यो वृद्धिं प्रेतश्राद्धानि कर्षति ।

स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥

इति निषेधश्रवणात् ।

**अथाशौचादिना मासिकादिविघ्ने निर्णयमाह**

ऋष्यशृङ्गः—

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिंस्तिथौ तस्यां कुर्यादन्तरितं च तत् ॥

तदिति प्राप्तकालं मासिकमन्तरितं च कुर्यादित्यर्थः । तच्चोभयमपि तन्त्रेण कार्यमित्याह कण्वः—

नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

सातन्त्र्यादेकतन्त्रेण ।

## अथ सपिण्डीकरणम् ।

तत्रादौ कालनिर्णयः । तत्र कर्तृप्रेतयोर्द्वयोरनग्निकत्वे श्राद्धचिन्तामणौ भविष्यत्पुराणे—

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासि मङ्गलस्याप्युपस्थितौ ॥

अत्र पूर्णेऽब्द इत्यस्य पूर्णे संवत्सर इति वचनान्तरसंवादाब्दसमाप्तिदिवसे सपिण्डनमिति प्राञ्चः । 'सम्वत्सरान्ते' इति विष्णुवचनात् । सम्वत्सरे पूर्णे सत्यव्यवहिताग्रिमदिन इति नव्याः । अत्र च सम्वत्सरान्तो मुख्यः । तदशक्तावेकादशनवमषष्ठतृतीयमासाः पूर्वपूर्वाशक्त्या ज्ञेयाः । तत्राप्यशक्तौ त्रिपक्षद्वादशाहादयः, प्रधानकालप्रत्यासत्तेः क्रमनियामकत्वात् । यदा तु द्वावपि साग्निकौ—

तदाऽऽह प्रचेताः—

सानिकस्तु यदा कर्ता प्रेतश्चाप्यग्निमान् भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं बुधैः॥

यदा तु कर्ता साग्निः प्रेतो ऽअनग्निस्तदा जटमल्लविलासे भविष्यपुराणे—

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः॥

गोभिलोऽपि—

साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान्भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः॥ इति।

यदा तु कर्ता निरग्निः प्रेतश्च साग्निस्तदाऽऽह सुमन्तुः—

कर्ता निरग्निः, प्रेतश्चेदाहिताग्निर्यदा भवेत्।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके॥

साग्नेः कर्तुरेकादशेऽहनि दर्शपाते तत्रैव सपिण्डनमाह कार्ष्णाजिनिः—

सपिण्डीकरणं कुर्यात् पूर्ववच्चाग्निमान् सुतः।
परतो दशरात्राच्चेत् कुहूरब्दोपरीतरः॥ इति।

दशरात्रात्परत एकादशेऽह्नि अमावास्या चेत्तदा तस्यामेव सपिण्डनं कुर्यादित्यर्थः। साग्नेरमावास्यायामपराह्णे पिण्डपितृयज्ञविधानात्सपिण्डीकरणे कृत एव च पिण्डपितृयज्ञप्रवृत्तेरिति भावः।

तदाह गालवः—

सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते।
आहिताग्निः सिनीवाल्यां पितृयज्ञः प्रवर्तते॥ इति।

अत एव प्रजापतिः—

नासपिण्ड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्।
पार्वणं नाप्यभ्युदयं कुर्वन्न लभते फलम्॥

सिनीवालीपदममावास्यामात्रपरम् । इतरोऽनग्निः, अब्दोपरि सम्वत्सरे पूर्ण इत्यर्थः । यत्तूक्तं जटमल्लविलासे हारीतेन--

या तु पूर्वममावास्या मृताहाद्दशमाद्भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥ इति ।

वसिष्ठेनापि--

प्रथमा स्यादमावास्या मृताहाद्दशमेऽहनि ।
सपिण्डीकरणं तत्र कुर्यादेव सुतोऽग्निमान् ॥ इति ।

तस्यायमर्थः---मृताहाद्यद्दशममहस्तस्मात्परा या अमावास्यैकादशाहस्तत्रेत्यर्थः पूर्वस्य । मृताहादिति पञ्चमी मर्यादायां, ततश्च मृताहादूर्ध्वदिनमारभ्येत्यर्थः परस्य । तेन सर्वेषामविरोधः। त्रिपक्षादिवर्षान्तानां कालानां मध्ये द्वादशाहः प्रशस्त इत्याह व्याघ्रपादः--

आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अनित्यत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥

द्वादशाह इति स्वाशौचान्तोपलक्षणार्थम् ।

तदाह कात्यायनः—

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम् ॥ इति ।

वृद्धमनुरपि—

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभृताम् ।
वैश्यानां च त्रिपक्षादावथवा स्यात्सपिण्डनम् ॥ इति ।

शूद्रस्य तु द्वादशाहोऽपि कालः । तदाह विष्णुः--

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्तितम् । इति ।

अमावास्याश्राद्धकर्तृशूद्रविषयमेतदित्यपरार्ककल्पतरुप्रभृतयः । वचनबलादाशौचमध्य एव कर्तव्यमित्यपरे । मुख्यकालस्त्वाशौचान्त एव "सर्वेषामपि" इति पूर्वोदाहृतकात्यायनवचनात्। अत एव दशमापिण्डस्याशौचान्तकर्तव्यतोक्ता ब्रह्मपुराणे—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा॥
शूद्राणां दशमः पिण्डो मासे पूर्णेऽह्नि दीयते॥ इति।

अवयवपिण्डासमाप्तौ च सपिण्डनस्याविधानादिति। वृद्धि-श्राद्धोपस्थितिश्चैकः कालः।

तत्र कात्यायनः—

"अथ सपिण्डीकरणम्" इत्यभिधाय 'यदहर्वा वृद्धिरापद्येत' इति। सुमन्तुरपि—

सपिण्डीकरणं तस्य वृद्धिर्वा यदहर्भवेत्।

पुत्रेण वृद्धिश्राद्धे कर्तव्ये सति वर्षान्तादिविहितकालाभावेऽपि वृद्ध्युपस्थितिरूप एव काले प्रेतस्य पितुः सपिण्डीकरणं कृत्वा पश्चात्तमादाय वृद्धिश्राद्धं कार्यम्। अन्यथा सापिण्डनाभावे प्रेतत्वानिवृत्तौ तमादाय वृद्धिश्राद्धं न स्यात्। यत्र तु सपिण्डनाधिकार्यसन्निधाने वृद्ध्युपस्थितिस्तत्रान्यद्वाराऽपि सपिण्डनं कारयित्वा वृद्धिश्राद्धं कर्तव्यम्, पूर्वोक्तयुक्तेः।

तदाह लघुहारीतः—

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः॥ इति।

यदा वृद्ध्युपस्थितावेव सपिण्डनं क्रियते तदाऽप्रेतनानि मासिकान्यपकृष्य कृत्वा पश्चात्सपिण्डनं कार्यम्।

श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम्।

इति गोभिलोक्तेः। तथा—

श्राद्धानि षोडशाऽपाद्य विदधीत सपिण्डनम्।

इति लौगाक्षिस्मृतेश्च। वृद्ध्यनन्तरं कात्यायनेन निषिद्धत्वाच्च—

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्।
अयातयामं मरणं न भवेत्पुनरस्य तु॥

अयातयामं—नवम्। शाट्यायनिरपि—

प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा।

अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं यदि॥

युक्तं चैतत्—

श्राद्धानि षोडशाऽऽपाद्य विदधीत सपिण्डनम्।

इति वाक्येन "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति-वत् नियतपौर्वापर्ययोः प्रकृतौ क्लृप्तक्रमत्वेन यत्र वृद्ध्यादिनिमित्तेन सपिण्डनापकर्षस्तत्र पूर्ववर्तिमासिकाद्यपकर्षोऽपि। तदादि वाऽभिसम्बन्धात्तदन्तमपकर्षे स्यात्' इति न्यायात्। यथा दैक्षे पशौ 'तिष्ठन्तं पशुं प्रयजन्ति' इति वाक्येन प्रयाजापकर्षे तदन्त-कर्मकलापापकर्ष इति कश्चित्। तन्न, नह्यत्र सपिण्डनषोडशश्राद्धादेः प्रकृतौ क्लृप्तक्रमस्य विकृतावपकर्षश्रवणमस्ति, येन तन्न्यायवि-षयता स्यात्। नच सम्वत्सरान्तविहितसपिण्डीकरणमेवापकृ-ष्यमाणस्य प्रकृतिर्येन तत्र श्रुतः षोडशश्राद्धानन्तर्यरूपः क्रमो-ऽत्रादिश्येत, सपिण्डनरूपकर्मणो भेदाभावात्। तस्मान्नायं तद-न्तन्यायविषयः। किन्तर्हि कृतदेशात्तु पूर्वेषां सदेशः स्यादित्यत्र राजसूये विदेवनादीनामभिषेकान्तानां तत्रैव पाठतः क्लृप्तक्रम-त्वाद्यथा माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति अभिषेकापकर्षे तत्पूर्वभाविनां विदेवनादीनामप्यपकर्षस्तथा 'यद्हर्वा वृद्धिः' इत्यादिशास्त्रेण सपिण्डनापकर्षे तत्पूर्वपठितानां षोडशश्राद्धाना-मप्यपकर्ष इत्येव वक्तव्यम्।

भविष्यपुराणे—

प्रमादादकृते तस्मिन् त्रिपक्षे द्वादशेऽह्नि वा।

उत्तरोत्तरकालेषु यथासम्भवमाचरेत्॥

गोभिलः—

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।

सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु॥

उत्तरभाविषु—त्रिपक्षाद्यब्दान्तेषु। अत्राप्यतिपाते ऋष्यशृङ्गः—

सपिण्डीकरणश्राद्ध मुक्ते काले न चेत्कृतम्।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्॥

गालवः—

सापिण्डीकरणश्राद्धमुक्ते काले भवेन्न चेत्।
अनुराधाऽर्द्रहस्तेषु सापिण्डीकरणं भवेत्॥

वर्ज्यान्यपि चन्द्रप्रकाशे—

ज्योतिषे यानि वर्ज्यानि तानि सर्वाणि वर्जयेत्।
नक्षत्रे न च कुर्वीत यस्मिन् जातो भवेन्नरः॥
न प्रौष्ठपदयोः कार्यं तथा चाग्नेयतारके।
दारुणेषु च सर्वेषु प्रत्यरिषु च वर्जयेत्॥
तृतीयसप्ततारासु दुष्टचन्द्रयुतेषु च॥

तथा—

प्रेतक्रिया न कर्तव्या रविवारैकपादभे।
नन्दायां भौमदिवसे विष्टौ च परिवर्जयेत्॥

इति त्रिविक्रमभरतादयो मन्यते। तदेतन्मलमासेऽपि कार्यम्।

तदाह वसिष्ठः—

असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा॥

## अथाधिकारिणः।

श्राद्धकल्पे—

सापिण्डीकरणं पुत्रैः कार्यैर्नान्यैस्तु निश्चितम्।
औरसैः क्षेत्रजैर्वापि धर्म एष सनातनः॥

विजातीयपुत्राणामप्यधिकार उक्तो हरनाथेन—

पुत्राः कुर्वन्ति विप्रस्य क्षत्रविट्शूद्रयोनयः।

स तादृशेभ्यः पुत्रेभ्यो न ददाति कदाचन ॥
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते ।

अत्र शूद्रयोनिपदेन पारशवो गृह्यन्ते ।

तदुक्तं तत्रैव--

ब्राह्मणेन न कर्तव्यं शूद्रस्य त्वौर्द्ध्वदेहिकम् ।
शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित् ॥

पारशवस्तु--

यो ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
ऊढायां, नत्वनूढाया स वै पारशवः स्मृतः ॥ इति ।

अत्रच-पुत्रैरिति बहुवचननिर्देशात्सर्वेषामधिकारः ।

तथा च पराशरः--

सपिण्डता च कर्तव्या पितुः पुत्रैः पृथक् पृथक् ।
स्वाधिकारप्रवृत्तत्वादितरश्राद्धकर्तृवत् ॥

एवं प्रत्येकमधिकारेऽप्येकेनैव कार्यमित्याहोशनाः--

नवश्राद्धं सपिण्डान्तं श्राद्धान्यपि च षोडश ।
एकेनैव तु कर्तव्यं विभक्तेषु धनेष्वपि ॥

लघुहारीतोऽपि--

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथक् नैव सुताः कुर्युः पृथक् द्रव्या अपि क्वचित् ॥

एकेन केन इत्यपेक्षायां प्रचेताः--

एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः ।
कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक् पृथक् ॥

व्यासोऽपि--

अर्वाक्संवत्सरात् ज्येष्ठः श्राद्धं कुर्यात्समेत्य च ।
ऊर्द्ध्वं सापिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् ॥

सम्वत्सरान्तसापिण्डीकरणाभिप्रायमेतत् । नन्वेवं प्रत्येक-

मधिकारसद्भावे एकेनैव कृतेऽन्येषामकरणे प्रत्यवायः स्यादिति चेत्?

बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः।
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्॥
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥

इति मरीचिवचनेन प्रत्यवायाभावबोधनात्।

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति(१)॥ (९।१०६)

इति मनुनाऽस्य प्राधान्यबोधनाच्च। तदयं निर्गलितोऽर्थः। विभक्तैरविभक्तैः संसृष्टिभिर्वा सपिण्डीकरणान्तानि सर्वैरपृथगेव कार्याणि 'सपिण्डीकरणान्तानि' इति विशेषोपादानात्;

अविभक्तेषु संसृष्टेष्वेकेनापि कृते कृतम्।

इति लिङ्गाच्च। ऊर्ध्वमविभक्तानामनियमः, उभयथा वचदर्शनात्।

विभक्तैस्तु पृथक्कार्यं प्रतिसम्वत्सरादिकम्।
एकेनैवाविभक्तेन कृते सर्वैस्तु तत्कृतम्॥
एकपाके निवसतां पितृदेवद्विजार्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे॥
भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥

इति पैठनिसिबृहस्पतिमरीचिवचनैरपृथवगेव विधानात्। तथा अविभक्तानामपि पृथक् पाकोपजीविनां पृथगेवेत्युक्तं सङ्ग्रहे—

भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि।
वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक् पृथक्॥

---

(१) 'तस्मात्सर्वमर्हति' इति मनुस्मृतौ पाठः।

तथा--

अविभक्तेन पुत्रेण पितृमेधो मृतेऽहनि ।
स्थानान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च ॥ इति ।

विभक्तानां तु पृथगेव, 'विभक्तैस्तु पृथक्कार्यम्' इत्यादिवचनात् । तदेतत्सपिण्डीकरणं ज्येष्ठेऽसन्निहिते कनिष्ठेनापि कर्तव्यम् । तदुक्तं श्राद्धकल्पे कार्ष्णाजिनिना—

मातापित्रोर्मृते काले ज्येष्ठे देशान्तरस्थिते ।
कनिष्ठेन प्रकर्तव्यं सपिण्डीकरणं तदा ॥

तथा तत्रैव मेधातिथिः—

गते वा रोधिते ज्येष्ठे पित्रा वा प्रेषिते सति ।
षण्मासान्न निवर्तेत तदा कार्यं कनीयसा ॥

दूरदेशङ्गते राज्ञा वा कारणवशेन रोधिते पित्रा वा स्वकार्यार्थं प्रेषिते इति । तथा ज्येष्ठे इत्यनुवृत्तौ--

अत्यातुरे समीपस्थमार्गे मृत्युभयान्विते ।
नातिदूरास्थितेऽप्यन्यः कुर्यात्प्राप्तं सापिण्डनम् ॥

अन्योऽनुजः--

दशाहाभ्यन्तरं यस्मात्स्थानात्प्राप्तुं न चेत् क्षमः ।
स्वस्थे मार्गेऽपि दूरत्वात्तदाकार्यं कनीयसा ॥

कनिष्ठोऽपि ज्येष्ठापेक्षया न सर्वेभ्यः । तथा काश्यादिषु मुक्तिक्षेत्रेषु सपिण्डैरसपिण्डैर्वा यत्कृतं दाहादि सापिण्ड्यान्तं प्रेतकार्यं तत्पुत्रैरेव कृतं भवेदित्युक्तं ब्रह्मवैवर्ते—

काश्यादिषु गयायान्तु प्रेतकार्यं कृतं च यत् ।
सपिण्डैरसपिण्डैर्वा कृतं तद्वै भवेत्सुतैः ॥ इति ।

चन्द्रकुतूहलेऽपि—

काश्याद्यष्टविधे तीर्थे यस्य स्याद्धि सपिण्डता ॥
स गच्छेद्वैष्णवं धाम पिण्डितैः सह भारत ॥ इति ।

विश्वामित्रोऽपि—

कुरुक्षेत्रे प्रयागे च वाराणस्यां त्रिपुष्करे।
असपिण्डोऽपि कुर्वीत मृतस्य हि सपिण्डनम्॥ इति।

यत्तु—

मासिकं च वृषोत्सर्गं सपिण्डीकरणं तथा।
ज्येष्ठेनैव प्रकर्तव्यमाद्धिकं प्रथमं तथा॥

इति, वृद्धवसिष्ठवचनं तज्ज्येष्ठस्य तदावश्यकताबोधनार्थमिति मेधातिथिभट्टलोल्लटप्रभृतिभिर्व्याख्यातम्। अत एवाकरणे तस्यैव प्रत्यवायः श्रूयते—

यावत्सपिण्डीकरणं न ज्येष्ठो विदधीत वै।
तावन्न मुच्यते लोके पैतृकादृणबन्धनात्॥ इति।

अत एव पुनः सापिण्डीकरणनिमित्तेषु कनिष्ठकृतिरप्येकं निमित्तं गणितम्। यदि कनिष्ठस्याधिकार एव न स्यात्तर्हि तत्करणस्य पुनःकरणनिमित्तता न स्यात्। तथा च शिङ्गाभट्टपद्धतौ सङ्ग्रहवाक्यम्—

मातापित्रोः कनिष्ठेन सपिण्डीकरणे कृते।
देशान्तरगतानां तु पुत्राणां तु कथं भवेत्॥

इति प्रश्नपूर्वकमुत्तरम्—

श्रुत्वा तु वचनं कार्यं दशाहान्तं तिलोदकम्।
ततः सपिण्डीकरणं कुर्यादेकादशेऽहनि॥
द्वादशाहे न कर्त्तव्यमिति शातातपोऽब्रवीत्।
देशान्तरस्थौ पितरौ मृतौ चेदन्यः प्रकुर्यादखिलं तु पैतृकम्।
दाहं विना तच्च पुनश्च सर्वं ज्येष्ठः प्रकुर्यादनुजैः सपिण्डनम्॥

अनुजैः कृतं सपिण्डनं पुनः कुर्यादित्यर्थः। पुनः सपिण्डीकरणनिमित्तानि कल्पकारिकायाम्—

व्युत्क्रमाद्यच्च सापिण्ड्यनियोगाद्यच्च कारितम्।

द्वितीयं तत् पुनः कुर्यात् क्रमप्राप्तौ स्वयं सुतः ॥

तथा—

विभक्तो वाऽविभक्तो वा मातापित्रोः सपिण्डनम् ।
कथञ्चिदनुजः कुर्याद् भूयः कुर्यात्तदग्रजः ॥

तथा—

यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु ।
तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ॥

तथा—

अनुजेन कृते तीर्थे सपिण्डावाधिपूर्वकम् ।
पुनर्ज्येष्ठेन कर्तव्यं श्रुत्वा मिश्रणपूर्वकम् ॥

मिश्रणं सपिण्डनम् । पुनः करणेविशेष उक्तस्तत्रैव ।

यवीयसा कृते श्राद्धे प्रेतशब्दंविहाय च ।
ज्येष्ठेनैव तु कर्तव्यं सपिण्डीकरणं पुनः ॥
यः सपिण्डीकृतं जन्तुं प्रेतशब्दे नियोजयेत् ।
असौ विधिघ्नो भवति पितृहा चोपजायते ॥

कात्यायनः ।

सपिण्डीकरणे वृत्ते श्रुत्वा पित्रोर्मृतिं सुतः ।
आदशाहं तस्य नाम्ना दद्यात्तस्य तिलाञ्जलीन् ॥

तथा—

पित्रोर्दाहादिकं कर्म श्रुत्वा देशान्तरे सुतः ।
सपिण्डीकरणं कुर्यान्न कुर्यात्षोडशीं पुनः ॥

यत्तु वायुपुराणे—

श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सापिण्डताम् ।
प्रोषितावासिते पुत्रः कालादतिचिरादपि ॥ इति ।

तद् भ्रात्राद्यकृतषोडशश्राद्धविषयः । अत एवापरार्कः— यदि तानि भ्रात्रादिना दत्तानि तदा सपिण्डत्वमेव कुर्यादिति ।

विशेषान्तरमप्याह संवर्तः—

कृतं कनीयसा वाऽपि यस्य श्राद्धं सपिण्डनम् ।
ज्येष्ठोऽपि हि सुतः कुर्यात्सापिण्डीकरणं पुनः ॥
पुनः सपिण्डीकरणं श्राद्धं पार्वणवद्भवेत् ।
अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च ॥ इति ।

युक्तं चैतत् कनिष्ठकृतसंयोजनेनैव प्रेतत्वनिवृत्तेर्प्रेतत्वनिवृत्त्यर्थत्वाच्च संयोजनस्येति प्रेतशब्दनिवृत्तिवत् ।

पुत्राभावे तु पौत्रस्याधिकारः—

पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् ॥
नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः ॥

इति छान्दोग्यात् । तदभावे—

पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वाऽपि क्रियाभाक्तु प्रजायते ॥

इति विष्णुपुराणवचनात् । सर्वसपिण्डाभावे पुत्र्यपि कुर्यादित्याह ऋष्यशृङ्गः—

अपुत्रस्य तु या पुत्री साऽपि पिण्डप्रदा भवेत् ।

महाभारतेऽपि—

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता ।
आशौचमुदकं पिण्डमेकोद्दिष्टं तयोरपि ॥

संस्कृतेति वचनादसंस्कृतायाः पितृगोत्रसम्बन्धादयत्नसिद्धोऽधिकार इत्याहुः ॥

अथ मातृसपिण्डनाधिकारिणः

कालादर्शे—

अपुत्रायाः सपत्नीजक्षेत्रजाद्याः पतिस्तथा ।
पूर्वाभावे परः कुर्याद्वृद्धिवत्पैतृमेधिकम् ॥

अपुत्रायाः औरसक्षेत्रजापुत्ररहितायाः ।

कात्यायनोऽपि--

विदध्यादौरसः पुत्रो जनन्या औध्र्वदेहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तयाऽऽवृता ॥
तेषामभावे तु पतिस्तदभावे सपिण्डकाः । इति ।

तयावृता-'पूर्वाभावे परः परः' इतिक्रमेण । अपरार्के लघुहारीतः--

पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये ॥

मार्कण्डेयः--

स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम् ।
सपिण्डीकरणं तासां पुत्राभावे न विद्यते ॥

भर्तुरभाव एतत् ।

तथा पैठीनसिः--

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् । इति ।

इदं त्वौरसकर्तृकमौध्र्वदेहिकमनन्वारूढायाः ।

अन्वारूढायास्त्वनौरसोऽपि भर्तुर्ज्येष्ठ एवौर्ध्वदेहिकं कुर्यात्

तथोक्तं भविष्यत्पुराणे--

एकां चितिं समारुह्य भर्तारं याऽनुगच्छति ।
तद्भर्तुर्यत्क्रियां कर्ता स तस्याश्च क्रियां चरेत् ॥

षडशीतिमतेऽपि--

पुत्रोऽन्यो वाऽग्निदस्तस्यास्तावदेवाशुचिस्तयोः ।
नवश्राद्धं सपिण्डान्तं युगपच्च समापयेत् ॥ इति ।

स्मृतिसारेऽपि--

उत्तरीयं शिलापात्रमग्निश्चैव तथा चरुः ।
एक एव भवेत्कर्ता दम्पत्योः सहयायिनोः ॥ इति ।

अयं च कर्त्रैक्यनियम औरससद्भाव एव घटते, अन्यथा प्राप्त्यभावेन नियमानर्थक्यात्।

स्मृत्यर्थसारेऽपि–सहदहने तु पाकैक्यं कर्त्रैक्यं च भवति।

अथेतिकर्तव्यता–तत्र गोभिलः–"चत्वार्युदकपात्राणि सतिलगन्धोदकानि त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेषु सिञ्चति 'ये सामाना' इति द्वाभ्यामेतेन पिण्डो व्याख्यातः" इति। उदकपात्राणि अर्घ्यपात्राणि। ब्रह्मपुराणे–

प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत्।
ततः पितामहादिभ्यस्तत्तन्मन्त्रैः पृथक् पृथक्॥
ये समाना इति द्वाभ्यां तज्जलं तु समर्पयेत्।
अथ तेनैव विधिना पिण्डमूलेऽवनेजनम्॥
पितुर्दत्त्वा तु पिण्डं तु दद्याद्भक्त्या तु पूर्ववत्।
दत्त्वा पिण्डमथाष्टाङ्गं ध्यात्वा तं च शुभाशुभम्॥
सुवर्णरूप्यदर्भैस्तु तस्मिन्पिण्डे ततस्त्रिधा।
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्चयेत्॥

विष्णुः–"संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय ब्राह्मणान् देवपूर्वान् भोजयेत्। अग्नौकरणमावाहनं पात्रं च कुर्यात् संसृजन्तुत्वा पृथिवी समानी वेति प्रेतपाद्यं पात्रत्रये योजयेदुच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्याद्ब्राह्मणांश्च स्वाचान्तान्दत्तदक्षिणांश्चानुव्रज्य विसर्जयेत्ततः प्रेतपिण्डं पाद्यपात्रोदकवत्पिण्डत्रये निदध्यात्कर्षूत्रयेऽप्येवमेव सपिण्डीकरणं मासिकार्थवद् द्वादशाहं कृत्वा त्रयोदशेऽह्नि कुर्यान्मन्त्रवर्जं शूद्राणां द्वादशेऽह्नि संवत्सराभ्यन्तरे यद्यपि मासिके भवेत्तदा मासिकार्थे दिनमेकं वर्द्धयेदिति"। कर्षूत्रयसन्निकर्षेऽप्येवमिति। प्रेतैकोद्दिष्टसम्बन्धिकर्षूत्रयसन्निहितानपि पिण्डान् पित्रादिपिण्डेषु योजयेत्। मासिकार्थवदिति। मासि भवानि मासिकानि तदर्थः

प्रेताध्यायनादिः तद्युक्तानि श्राद्धानि मासिकार्थवन्ति तान्याशौचापगमे द्वादशाहं द्वादशस्वहःसु कृत्वा त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यादित्यर्थः ।

शौनकोऽपि—"अथ सपिण्डीकरणं चत्वार्युदपात्राण्येकं प्रेतस्य त्रीणीतरेषां प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् । 'समानी व आकूतिः' इत्येवमेव प्रथमपिण्डं त्रिषु पिण्डेषु नियोजयेत्। 'मधुमतीभिः सङ्गच्छध्वम्' इतिद्वाभ्यामेव चतुर्थोऽनुज्ञापितो भवतीति"। अत्र चत्वार्युदकपात्राणीति वदता चत्वारो ब्राह्मणाः पितृवर्गे दर्शिताः । द्वौ च विश्वेदेवार्थे, ।

सपिण्डीकरणश्राद्धं देवपूर्वं नियोजयेत् ।

इति शातातपोक्तेः ।

यत्त्वाश्वलायनवचनम्--

न त्वत्रदैवे योजयेदिति, तत्पैतृकार्चनकाण्ड दैविकपदार्थसंकरं न कुर्यादित्येवमर्थमिति कल्पतरुः । श्राद्धकल्पे ब्रह्मपुराणे--

चतुर्भ्यश्चार्घ्यपात्रेभ्य एकमेकेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥
श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डताम् ।
तयोस्त्रिपुरुषं पूर्वमेकोद्दिष्टं ततः परम् ॥

श्राद्धद्वयमित्यनेन यैः सह सपिण्डनं तेषामेकं श्राद्धं, विश्वेदेवाऽऽवाहनपिण्डदानादिविधानात् । अपरं च प्रेतैकोद्दिष्टमित्येवं द्वित्वसम्पत्तिरिति भट्टोल्लटः ।

शङ्खधरस्तु श्राद्धद्वयमित्यत्र द्वित्वमविवक्षितम् ।

सपिण्डीकरणश्राद्धं देवपूर्वं नियोजयेत् ।

इत्यादिस्मृतिपुराणवचनेष्वेकवचनोपादानादित्याह । सपिण्डनस्य पार्वणैकोद्दिष्टरूपत्वेनोभयाविलक्षणं नरसिंहाकारमिदमिति हरनाथदिवोदासचन्द्रप्रकाशादयो मन्यन्ते । सङ्कल्पस्तु ना·

सगोत्रोच्चारपूर्वकं प्रेतस्य सपिण्डनश्राद्धं करिष्ये इत्येव। तत्र च सर्वेषामविवाद एव।

तदुक्तं मैत्रायणीयगृह्यपरिशिष्टे--

विश्वेदेवा यथा श्राद्धे ह्यङ्गभूता हि पार्वणे।
प्रेतपित्रादयस्तद्वदङ्गत्वेन सपिण्डने॥
तस्मान्नोच्चरणीयास्ते सङ्कल्पे तु सपिण्डने।
उच्चार्या उपचारेषु सहयोगेऽथवोच्चरेत्॥ इति।

अन्योऽपि विशेषस्तत्रैव--

प्रेतार्घ्यादि च तृप्त्यन्तं न च मिश्रवदाचरेत्।
पित्र्ये विप्रकरे होमः साग्नेरपि भवेदिह॥
अग्नौकरणशेषं हि पित्र्यब्राह्मणभोजने।
नैकोद्दिष्टे हि विकिर इतरस्मिन्नियोगतः॥
पितृपिण्डान्त्यसंस्थानांस्तथा प्रत्यवनेजितान्।
प्रेतपिण्डात्पुरस्तात्तानित्येवं काठकश्रुतिः॥
प्रेतपिण्डं त्रिधा कृत्वा निदध्यादर्घ्यपात्रवत्।
त्रिषु पिण्डेष्वनुज्ञातो ब्राह्मणैः श्राद्धतर्पितैः॥
पिण्डान्सम्पूज्य विधिवदभिमृश्येदमुच्चरेत्।
एष वोऽनुगतः प्रेतः पितरस्तं दधात्विति॥
शिवमस्त्विहशेषाणां जायन्तां चिरजीविनः॥

अथ सपिण्डनानुक्रमणी श्राद्धकल्पे-

पूर्वेद्युस्तदहर्वाऽपि षड्विप्रान्संनिमन्त्रयेत्।
दैवे द्वावुपवेश्याथ प्रेते त्वेकमुदङ्मुखम्॥
ततस्त्रीन्सर्वपित्र्येषु कुर्याच्छ्राद्धद्वयं सुतः।
प्रेतस्यामुकगोत्रस्य प्रेतत्वस्य विमुक्तये॥
सपिण्डीकरणं श्राद्धं करिष्येऽहमथोच्चरेत्।
तत्पित्राद्या ह्यनुच्चार्याः सपिण्डीकरणं बुधैः॥

पितॄनावाहयेत्तत्र तिलैः सर्वानथार्चयेत् ।
प्रेतपात्रं ततस्तूष्णीं पूरयेदत्र वै तिलान् ॥
निक्षिपेन्मन्त्ररहितं गन्धपुष्पादि च क्रमात् ।
तत्पुरस्तात्पितॄणां स्यान्मन्त्रवत्पात्रपूरणम् ॥
अमन्त्रं प्रेतपात्रार्धं चतुर्थांशं प्रयच्छति ।
प्रेतस्य नामगोत्राभ्यां तस्य विप्रकरे ततः ॥
ये समाना इति द्वाभ्यामवशिष्टं त्रिषु क्षिपेत् ।
पित्र्यपात्रेषु तेनैव किञ्चित्तत्र न शेषयेत् ॥
वत्सगोत्र शिवप्रेत गोत्रेणामुकशर्मणा ।
मन्त्रान्त इदमुच्चार्य तात्पित्रा सह संसृज ॥
एवं पात्रद्वये सर्वं तथा मात्रादिषु स्मृतम् ।
भद्रमेधातिथिः प्राह प्रसेकोऽर्घ्यादनन्तरम् ॥
सचार्घ्यात्प्राक् तु गोविन्दराजशङ्खधराविति ॥

अथाऽत्यन्तापदि सापिण्डनविधिः ।

तत्र गोभिलः--

अनुक्तकालेष्वपि तु व्युत्क्रमेण मृतावपि ।
आमेन वाऽपि सापिण्ड्यं हेम्ना वाऽपि प्रकल्पयेत् ॥ इति ।

एतत्सर्वं विषयाविशेषश्रवणादापत्कल्पत्वात्त्वेतिस्मृतिसारादयः । पितृव्यतिरिक्तविषयमिति कालादर्शः ॥

अथ मातुः सापिण्डीकरणम् ॥

याज्ञवल्क्यः—

एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि (१।२५४) ।

एतत् समनन्तरोक्तं सापिण्डीकरणं पूर्वोक्तमेकोद्दिष्टं च स्त्रिया अपि मातुरपि कर्तव्यम् । तत्र तावदनुगमनमृताया मातुः सपिण्डनं पत्यैव सह कार्यम् ।

तदाह शातातपः—

मृता याऽनुमता नाथं सा तेन सहपिण्डनम् ।

अर्हति स्वर्गवासेऽपि यावदाभूतसंप्लवम् ॥

यमोऽपि—

पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥ इति ।

पत्या चैकेनेत्यत्र पतिपदं पत्युः पित्रादीनामुपलक्षणार्थमित्येके । एकेन पत्यैव न तत्पित्रादिभिः सहेत्यन्ये ।

हारीतोऽपि—

स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः ।
एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः ॥

तदेतत्पृथक्चित्यारोहणविषयमेकचित्यारोहणे पतिसपिण्डनेनैव तस्या अपि कृतत्वादिति शङ्खधरः । पतिमुद्दिश्य दिनान्तरमरणविषयमिति गोविन्दराजः । दिनान्तरमृते पुत्रः स्वपितृपितामहपिण्डमध्ये कुशासनं धार्य पित्रैकेन मातुः सपिण्डनं कुर्यादिति स्मृत्यर्थसारः । पत्युद्देशेन मातुरग्निप्रवेशमरणविषयमिति मदनः । मातुर्यथा कथंचिन्मरणमात्रे सहगमनाद्यभावेऽपि पत्यैव सह सपिण्डनमिति मुख्यः कल्पः । अपरे तु पक्षा गौणा इति दिवोदासचन्द्रप्रकाशादयः । वस्तुतस्त्वनुगमनविषयत्वमेव युक्तम् । 'मृता याऽनुगता नाथम्' इति वचनात् । नाथं प्रेतमनुलक्ष्यीकृत्य गता नत्वनु पश्चाद्गतेति भट्टलोल्लटेन व्याख्यातत्वात् ।

विज्ञानेश्वरोऽपि अन्वारोहणे पत्यैव सह सापिण्ड्यमाह ।

सहैकचित्यारोहणे तु विशेषः श्राद्धकल्पे आपस्तम्बः—

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
पृथक्पिण्डप्रदानं न तस्मात्पत्नीषु युज्यते ॥
चतुर्थीहोममन्त्रैः स्त्री पत्युर्देहार्धतां व्रजेत् ।
अतो धर्मे च पिण्डे च भवेत्तस्यार्धभागिनी ॥

मृते पितरि मातुस्तु न कार्या सहपिण्डता ।
भर्तुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् ॥

अयमर्थः—एकस्यामेव तिथौ एकचित्यां सहारूढयोर्दम्पत्योः पतिपिण्डदानसमय एव द्वयोर्नामग्रहणं कार्यं, न पृथक् मातुः पिण्डदानं, पितृपिण्डेनैव तस्या अपि जातत्वादिति। एतन्मूलवाक्यं च चन्द्रप्रकाशे—

एकचित्यधिरोहश्चेत्तिथिरेकैव जायते ।
एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी ॥ इति ।

व्याख्यातं चैतच्छङ्खधरेण—एकस्यामेव तिथौ एकचित्यधिरोहश्चेज्जायते तदा पिण्डैक्ये सपिण्डीकरणे एकपाकेन एकपिण्डेन द्वयोर्नामनी गृह्णीतेति सम्बन्धः । अयमेव चार्थः स्पष्टीकृतः स्मृत्यर्थसारे—अन्वारोहणैकदिनमरणे स्त्रियाः पृथक् सपिण्डीकरणं न कार्यम् , भर्तुश्च कृते स्त्रियाश्च कृतं भवतीति।

## अथ सहानुगमनातिरिक्तप्रकारान्तरमरणे मातुः सापिण्ड्यं केनेत्यपेक्षायाम् ?

शङ्खः—

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ? ।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम् ॥

शातातपोऽपि—

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।
पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् ॥

छन्दोगपरिशिष्टेऽपि—

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।

तदेतद् ब्राह्मादिविवाहोढाविषयमिति चिन्तामणिः। तदाह श्राद्धकल्पे यमः—

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
तस्याः सपिण्डीकरणं पितामह्यादिभिः सह ॥ इति ।

ब्राह्मदैवार्षप्राजापत्यैरूढाया इति मदनः। तदेतत्पितामह्याः सापिण्ड्यं जीवत्पितैव कुर्यात्।

तदाह यमः—

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम्॥ इति।

मृतपितृकस्य विकल्पमाह स एव—

प्रमीतपितृकः पित्रा पितामह्याऽथवा सुतः॥ इति।

अत्र सर्वत्र पितामहीपदं प्रपितामहीवृद्धप्रपितामह्योरुपलक्षणम्, 'पितामह्यादिभिः सार्द्धम्' इति शङ्खोक्तेः। अन्योऽपि पक्षो मातृसापिण्ड्ये शातातपेनोक्तः—

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डता॥ इति।

तस्या मातुर्मात्रा मातुरेव पितामह्या तच्छ्वश्र्वा तस्या मातृपितामह्याः या श्वश्रूः मातुःप्रपितामही तयेत्यर्थः। पूर्वस्यां जीवन्त्यामुत्तरोत्तरयेति वाशब्दार्थमाह मदनः। आसुरादिविवाहे तु मातामह्यादिभिरेवेति वाशब्दार्थ इति शङ्खधरः। युक्तं चैतदेव एकेन साविण्ड्यादर्शनात्तिसृभिरेव साविण्ड्यं युक्तम्। वाशब्दस्त्ववधारणे इति। पूर्वपूर्वजीवने उत्तरोत्तरयेत्यर्थप्राप्तमवक्तव्यमिति। सचायमासुरादिविवाहोढाविषय इति सर्व एव।

आसुरादिविवाहेषु विन्नानां योषितां स्मृता।

इति तेनैवोत्तरार्द्धेनाऽभिधानात्। आसुर, गान्धर्व, राक्षस, पैशाचविवाहैरूढाया इति मदनः। पक्षान्तरमप्याह सुमन्तुः—

पिता पितामहे योज्यः सम्पूर्णे वत्सरे सुतैः।
माता मातामहे तद्वदित्याह भगवान् शिवः॥

उशनाः—

पितुः पितामहे यद्वत्संपूर्णे वत्सरे सुतैः।
मातुर्मातामहे तद्वदेषा कार्या सपिण्डता॥ इति।

तदेतत्पुत्रिकापुत्र विषयमिति सर्व एव।

तदाह बौधायनः—

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये च पितुस्तस्यास्तृतीये च पितामहम् ॥ इति ।

नन्वत्र वाक्ये त्रिदैवत्यश्राद्धविधानात्पार्वणस्य च त्रिदैवत्यत्वात्पार्वणश्राद्धविषयमिदमिति गम्यते । सापिण्डनस्य तूभयात्मकत्वेन चतुर्दैवतत्वात् । प्रकृते च सपिण्डनादिपदाभावादिति चेत् ? सत्यम् ,

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम् ।
प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः ॥

इति वाक्यस्य तत्पित्रा मातामहेनेति च व्याख्यानस्य श्राद्धकल्पलिखितस्य तन्मूलत्वात् ॥

अथापुत्रायाः पत्न्याः सपिण्डनम् ।

पैठीनसिः—

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

अस्याः श्वश्र्वादिभिः स्वमात्रादिभिरिति सर्वसम्मतम् ।

तदुक्तं व्यासेन—

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् ।
स्वस्य मात्रादिभिः सार्द्धमेवं धर्मेण युज्यते ॥ इति ।

अथापुत्रस्य भर्तुः पत्न्या सापिण्ड्यं कार्यमित्याह लौगाक्षिः—

सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ॥

सुमन्तुरपि—

अपुत्रे संस्थिते कर्ता नास्ति चेच्छ्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा ॥ इति ।

यत्तु धवलनिबन्धे--

सपिण्डीकरणं तस्मादपुत्रस्य द्विजन्मनः ।
आशौचमुदकं कार्यमेकोद्दिष्टं न पार्वणम् ॥

तथा--

अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषोऽपि वा ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम् ॥

गृह्येऽपि-'पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेत्' इति । पुत्रवांश्चेदिति वचनान्नापुत्रयोः स्त्रीपुरुषयोः सपिण्डनमित्युक्तम् । तन्न, अपुत्रस्येत्यादिवाक्यानां पुत्रोत्पादनविधिप्रशंसापरत्वेनाप्युपपत्तेर्न निषेधपरत्वम् निषेधपरत्वे च--

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् ।

तथा--

पुत्राभावे स्वयं कुर्युः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं तत्र ततः पार्वणमन्वहम् ॥

इत्यादिवाक्यैः सपिण्डनस्य विहितत्वादष्टदोषदुष्टो विकल्पः स्यादिति माधवाचार्यस्वरसः । दिवोदासप्रकाशे तु जीवत्पितृकप्रेतविषयमिदम् ,

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ॥

इति वचनादित्युक्तम् । अनुमतमेतच्चन्द्रप्रकाशेनापि । वस्तुतस्तु, 'अपुत्रस्य' इत्यादि भागस्यैकोद्दिष्टविधिशेषत्वेन स्वार्थपरत्वाभावान्न सापिण्ड्यनिषेधकत्वमिति प्रतिभाति । तेन दिवोदासादिव्याख्यानमप्यापातत एवेति बुद्ध्यते । स्मृत्यर्थसारेणापि अनपत्यसपिण्डनं निषिद्धम् । ब्रह्मचारिणामनपत्यानां च सपिण्डीकरणं नास्ति, तेषां सदैकोद्दिष्टमिति । तेन विकल्प एवेत्यन्ये ॥

अथ मातुः सापिण्ड्ये गोत्रनिर्णयः ।

तत्रोशनाः—

स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ।
स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥

तथा बृहस्पतिः—

भर्तृगोत्रेण दातव्यं स्त्रीणां पिण्डोदकं सुतैः ।
पितामहपितृभ्यां च स्वेन स्वेन विधानतः ॥
पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः ।
भर्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः ॥

चन्द्रप्रकाशे—

चतुर्थीहोममात्रेण त्वङ्मांसहृदयेन्द्रियैः ।
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत् ॥

तदेतद्ब्राह्मादिविवाहोढाविषयमिति मदनपारिजात, श्राद्धकल्पचिन्तामणि, दिवोदास, चन्द्रप्रकाश, गोविन्दार्णवादयोम न्यन्ते । तन्मूलवाक्यं श्राद्धकल्पे मार्कण्डेयपुराणे—

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण दातव्यास्तस्याः पिण्डोदकक्रियाः ॥ इति ।

यत्तु—

पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः ।
जन्मन्यपि विपत्तौ च नारीणां पैतृकं कुलम् ॥ इति,

तदाऽऽसुरादिविवाहोढाविषयमिति सर्व एव मन्यन्ते, तस्यापि मूलं श्राद्धकल्पे मार्कण्डेयपुराण एव—

आसुरादिषु चान्येषु पितृगोत्रेण धर्मवित् ॥ इति ।

पुत्रिकाया अपि सम्पूर्णदानानिष्पत्तेः पितृगोत्रमेवेति मिताक्षरा ।

तदुक्तं श्राद्धकल्पे—

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्याद्वै पुत्रिकापुत्रो धर्म एष सनातनः ॥ इति ।

अत्र कश्चिद्विशेषमाह शातातपः—

अप्रत्तायां पिता कुर्यात्प्रत्तायां तु पतिस्तथा।
स्वेन स्वेनैव गोत्रेण संस्थितायां तिलोदकम्॥

एतेन वैवाहिकसप्तमपदादर्वाक् तदभिव्याप्य वा मृतायाः कन्यायाः पित्रा भ्रात्रा तद्दानाधिकारिणा वा और्ध्वदेहिकं स्वगोत्रेणैव कर्तव्यमिति नियम्यते। तत ऊर्ध्वं पत्यादिना स्वगोत्रेणेति दिवोदासचन्द्रप्रकाशौ मन्येते।

तथा—

संस्थितायां तु भार्यायां सपिण्डीकरणान्तिकम्।
पैतृकं भजते गोत्रमूर्ध्वं तु पतिपैतृकम्॥

भार्या भर्त्तुर्योग्या कन्या 'रक्षेत्कन्याम्' इति स्मरणात्। तस्यां संस्थितायां मृतायां पैतृकं गोत्रं जनककुलं कर्तृभूतं सपिण्डीकरणान्तिकं कर्म भजते कुर्यादित्यर्थः। ऊर्ध्वं विवाहानन्तरं पतिपितुरिदं पतिपैतृकं श्वशुरसम्बन्धीत्यर्थः। तद्गोत्रं कर्त्तृ सपिण्डीकरणान्तिकं कर्म भजत इति पूर्वेण सम्बन्धः। यद्वा सपिण्डीकरणान्तिकं कर्म कर्तृभूतं पैतृकं गोत्रं भजते आश्रयति तेन गोत्रेण निष्पद्यत इत्यर्थः। एवमुत्तरत्रापि। अस्मिंश्च व्याख्याद्वये पूर्ववचनमेव मूलमिति। अत्र सम्बन्धिभार्यापदेन भार्यात्वप्रतियोगिनः पत्युरेवोपस्थितत्वात् पतिकर्तृकपत्नीसपिण्डीकरणविषयमिति हरनाथः। अत्र येन केनापि सह मातुःसापिण्ड्येऽपि यत्रान्वष्टकादिषु मातृश्राद्धं पृथग्विहितम्—

अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह॥

इत्यादिना, तत्र सर्वत्र पितामह्यादिभिरेव सह पार्वणश्राद्धं कर्तव्यम्।

तदाह शातातपः—

नान्दीमुखेऽष्टके श्राद्धे गयायां च मृतेऽहनि ।
पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत् ॥ इति ।

'अन्यत्र पतिना सह' इति पतिसापिण्ड्ये तदंशभागित्वाचेनैव सह, मातामहसापिण्ड्ये तु तदंशभागित्वादेव तेन सह ।

तदाह शातातपः—

एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी ॥ इति ।

एवं सति मातामहेन सापिण्ड्ये मातामहश्राद्धं पितृश्राद्धवन्नित्यमेव । अन्यसापिण्ड्ये तु न नित्यमिति । मिताक्षरादिसर्वग्रन्थसम्मतोऽयं निर्णयः ॥

**अथ व्युत्क्रममृतस्य सापिण्ड्यमस्ति नेति विचार्यते ।**

तत्र कात्यायनः—

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।

व्याख्यातं चैतद्विज्ञानेश्वराचार्यैः—एतच्च पितुः सपिण्डीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यम् । पितरि प्रेते पितामहे वा जीवति सपिण्डीकरणं नास्त्येवेति । उपसंहृतं च गोब्राह्मणादिहतस्य व्युत्क्रममृतस्य सपिण्डीकरणासम्भवे तमुल्लङ्घ्य पितामहादिभ्यः पार्वणविधानमनुपपन्नमिति सपिण्डनाभावोऽवगम्यत इति । तथा षट्त्रिंशन्मते—

व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

तथा यज्ञपार्श्वपरिशिष्टे—

जीवेत्पितामहो यस्य पिता वान्तरितो भवेत् ।
पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ॥ इति,

तदेतन्मातापितृभर्तृव्यतिरिक्तविषयमिति मदनपारिजातप्रभृतयः ।

तथाच स्कन्दपुराणे—

व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।

यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ॥ इति ।

एष विधिः—व्युत्क्रममृतौ न सपिण्डनमिष्यत इत्ययं विधिः । अत एव व्युत्क्रममृतस्यापि सपिण्डनाविधिर्दर्शितो ब्रह्मपुराणे—

मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्ववत् ॥ इति ।

मनुरपि—

पिता यस्य निवृत्तः स्याज्जीवेद्वाऽपि पितामहः ।
पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ॥ (३।२२१)

"जीवते पितामहाय न दद्यात्, किं तर्हि ? ततः पूर्वाभ्यां पितुश्चेत्येवं त्रिभ्यो निपृणीयादितिस्मरन्ति" इति ।

गोविन्दराजोऽप्येवमाह—यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यादिति वचनादिति । कुल्लूकभट्टस्तु—नामकीर्तनमत्र श्राद्धोपलक्षणम् । यस्य पुनः पिता मृतः स्यात्पितामहश्च जीवति स पितृपितामहयोर्द्वयोरेव श्राद्धं कुर्यादित्याह । सर्वज्ञनारायणकृता तु व्याख्याऽन्यथैव । यथा-वृत्तो मृतः जीवेद्वाऽपि इति' वाशब्दश्चार्थे 'कीर्तयेत्प्रपितामहम्' प्रपितामहनामकीर्तनेन श्राद्धं प्रवर्तयेदित्युक्तं भवति इति । विज्ञानेश्वरोऽप्यन्यथैवाह—पितुः स नामसंकीर्त्येति शब्दप्रयोगनियमायनपिण्डद्वयदानार्थम् ।

पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ।

इत्यर्थ्यैतत्ग्रहणात्सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः इत्येव प्रयोगो न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वान्तत्वमिति । तदेतद् बहुनिबन्धासम्मतमाचारानगतं च दृश्यते इति मेधातिथिप्रमुखव्याख्यैवादरणीयेति ॥

यत्र तु पितृपितामहौ प्रेतौ प्रपितामहश्च जीवति तत्राह—

विष्णुः—'यस्य पितापितामहौ च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहापितामहाय दद्यादिति'। अतश्च प्रेतस्य पितृपितामहप्रपितामहानां मध्ये य एव जीवति तमतिक्रम्य तदग्रेतनं गृहीत्वा त्रिकः पूरणीयः—

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते।
चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते॥

इति वचनादिति दिवोदासचन्द्रप्रकाशादयः। अत्र च पितृपितामहप्रपितामहानां मध्ये येनकेनापि सापिण्ड्ये पितृप्राप्तिर्भवत्येवेत्याह सुमन्तुः—

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः॥

## अथ मातुर्व्युत्क्रममरणे—

ब्रह्मपुराणे—

मातर्यग्रे मृतायां तु विद्यते च पितामही।
प्रपितामहिपूर्वं तु कार्यस्तत्राप्ययं विधिः॥

चन्द्रप्रकाशे हारीतोऽपि—

तस्मिन्सति सुतः कुर्यात्पितामह्या सहैव तु।
तस्यां वै च तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः॥

तस्याः पितामह्याः श्वश्र्वा प्रपितामह्येत्यर्थः। एतत्तु पितामह्या सह सपिण्डीकरणपक्षे। मातामह्या सह सपिण्डीकरणपक्षे तु शातातपः—

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डना।
आसुरादिविवाहेषु विन्नानां योषितां स्मृता॥ इति।

पूर्वस्यां पूर्वस्यां जीवन्त्यामुत्तरोत्तरयेति मदनमतं प्राक्दर्शितमेव। एवं मातामहसापिण्ड्यपक्षेऽपि व्युत्क्रममरणे ज्ञेयम्। व्युत्क्रममृतायाः पतिकर्तृकसापिण्ड्ये प्रदीपोदाहृतं स्मृत्यन्तरवचनम्।

श्वश्रूर्जीवति भर्ता च स्नुषा चान्तर्हिता यदि ।
पितामह्यादिभिः कुर्यात्सापिण्डीकरणं पतिः ॥
तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः ॥

तस्याः श्वश्र्वा पितामह्येत्यर्थः । एवं पत्न्यादिकर्तृकेऽपि द्रष्टव्यम् । पितृकर्तृके पुत्रसपिण्डने विशेषमाह श्राद्धकल्पे बौधायनः—

पितुः पुत्रेण कर्तव्यं न कुर्वीत पिता सुते ।
अतिस्नेहेन कुर्याच्चेत्सपिण्डीकरणं विना ॥

अत्रापरो विशेषः कात्यायनेनोक्तः—

असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥

असंस्कृतौ दाहादिसपिण्डनान्तैः कर्मभिः पूर्वौ पितामहप्रपितामहौ पापिष्ठं संस्कारादिराहित्यान्नपातित्येन चाण्डालादिहननेन वा, 'पापकर्मिणो न संसृजेरन् स्त्रियश्च व्यभिचारिणीः' इति गौतमवचनात् । न संसृजेरन् सपिण्डीकुर्युः । 'असंस्कृतौ न संस्कार्यौ' इत्येतच्च प्रत्यासन्ने सपिण्डीकरणकर्तरि सति पौत्रादिना न कर्तव्यमित्येतत्परम्, असति तु संस्कुर्यादेवेत्यपरार्कः ॥

## अथ सपिण्डनापवादः ।

शातातपः

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥

ब्रह्मीभूतो यतिः । उशनाः—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः ॥
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

तथा श्राद्धकल्पे व्याघ्रपात् 'यतीनां तु विधीयते' इति त्रिदण्डिनामेवायं पार्वणविधिर्नैकदण्डिनामिति भाति, 'त्रिदण्डग्रहणादेव' इति विशेषाभिधानात् । यदपि

दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्तव्यं पार्वणं तस्य सर्वदा ॥

इतिप्रचेतोवचने दण्डसामान्योपादानं, यदपि च ।

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ॥

इति वायुपुराणीयं सामान्याभिधानं तत्सर्वं त्रिदण्डिपरमेव,

सामान्या विधिरस्पष्टः संह्रियेत विशेषतः ।

इति न्यायात् । यथा 'पुरोडाशं चतुर्धा करोति' इत्यनेन पुरोडाशमात्रस्याविशेषेण चतुर्द्धाकरणे विहितेऽप्याग्नेयं चतुर्द्धा करोतीत्यनेनाग्नेयपरत्वं चतुर्द्धाकरणस्य, तद्वदत्रापीति । तथा सति एकदण्डिनां न किञ्चिदेवेति । तत्र च—

ब्राह्मणादिहते ताते पतिते संगवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इत्यनेन तत्पितृश्राद्धमेवेति प्रतीयते । अयं चार्थः श्राद्धचिन्तामणिशूलपाणिप्रभृतिभिः स्फुटमेवाभिहितः । अन्ये तु त्रिदण्डग्रहणमित्युपलक्षणम् , 'दण्डग्रहणमात्रेण' इत्यादौ सामान्योपादानात् । तेन सन्यासिमात्रस्यायं पार्वणादिविधिर्न दण्डिनामेव । अन्यथा आशौचादिनिषेधोऽपि त्रिदण्डिपर एव स्यादिति एकदण्डिनां तत्प्रसङ्गः ।

अत एव ब्रह्मपुराणे—

त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः ।
यतेः किञ्चिन्न कर्तव्यं न चान्येषां करोति सः ॥

इति वदन्ति । वस्तुतस्तु—

वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैव नियता दण्डाः स त्रिदण्डी यतिः स्मृतः ॥

इतिमार्कण्डेयपुराणवचनेन त्रिदंडिशब्दस्य वाक्कायमनोदण्डत्रयोपेतपरतया माधवाचार्यैर्व्याख्याततत्वेन च तथाविधत्वस्य चैकदण्डिनामपि सम्भवात्संन्यासिमात्रपरमिदमिति प्रतिभाति । शिष्टाचारोऽप्यस्यानुगृह्णात इत्यलं बहुनाः ।

तथा स्मृत्यर्थसारे 'ब्रह्मचारिणामनपत्यानां च सपिण्डीकरणं नास्ति, तेषां सदैकोदिष्टविधिः इति । अनपत्यविषये तु व्यवस्था पूर्वमुक्तैव । शूद्रापुत्रस्य द्विजैः पित्रादिभिः सहपिण्डनं न कार्यमित्युक्तं हरनाथे शङ्खेन—

नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः ।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितोऽपि ते ॥

ब्राह्मणादिहतानां पतितानां च प्रायश्चित्ताकरणे सपिण्डीकरणं नास्तीति स्मृत्यर्थसारः । तेषामपि संवत्सरानन्तरं प्रायश्चित्तं विधाय नारायणबलिपूर्वं सर्वमौर्द्ध्वदेहिकं कार्यम् इति प्रपञ्चितमेव प्राक् ।

इति सपिण्डीकरणविधिः ॥

## अथ पाथेयश्राद्धम् ।

तदुक्तं प्रयोगसारे हारीतेन—

समुद्दिश्यैकपुरुषं न दद्यात्पुरुषत्रये ।
द्वादशेऽहनि कर्तव्यं पाथेयं पितृतृप्तये ॥ इति ।

द्वादशेऽहनि इति सपिण्डीकरणदिवसोपलक्षणम् । तत्रैकपुरुषोद्देशंनिषिध्य पुरुषत्रयोद्देशस्य विधानात्तस्य च सपिण्डनोत्तरकालमेव सम्भवात् ।

अथ सपिण्डनोत्तरदिने वा स्वस्तिवाचनं कुर्यात् ।

तन्मूलं च बहुग्रन्थे फक्किकारूपमेवेति ।

धर्मप्रदीपेऽपि—

सूतकान्ते विवाहादौ श्राद्धान्ते प्रथमार्तवे ।
पुण्याहं वाचयित्वा तु भोक्तव्यं स्वस्थमानसैः ॥ इति ।

अथ सोदकुम्भश्राद्धम् ।

याज्ञवल्क्यः—

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥

गौतमः—

सदैवं पार्वणश्राद्धं सोदकुम्भं सदक्षिणम् ।
कुर्यात्प्रत्याब्दिकश्राद्धात्संकल्पविधिनाऽन्वहम् ॥

इदं च कृते वा सपिण्डने यावद्वर्षं प्रत्यहं, तदशक्तौ प्रतिमासं वा दिवसगणनया कार्यम् । सपिण्डनोत्तरकालं पार्वणं पूर्वमेकोद्दिष्टमिति । तच्च भोजनादिनियमरहितं विश्वेदेवरहितं सांकल्पविधिना कार्यमिति संक्षेपः ॥

अथ महागुरुनिपाते प्रथमाब्दे वर्ज्यानि ।

तत्र धवलनिर्बन्धे देवलः—

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः ।
महागुरुनिपाते तु प्रेतकार्यं यथाविधि ॥
कुर्यात्सम्वत्सरादर्वागेकोद्दिष्टं न पार्वणम् ॥

अकृते सपिण्डीकरणे सम्वत्सरादर्वाक् प्रेतकार्यं षोडशश्राद्धादि एकोद्दिष्टं कुर्यान्न पार्वणमिति ।

सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥

इति पैठीनसिवचनात् । यत्त्वन्यदीयमेकोद्दिष्टं पार्वणं च न कार्यमिति भ्रान्तप्रलपितम्, तन्न; तथा सति पितृमरणोत्तरकाले

प्रथमाब्द एव मृतस्य भ्रात्रादेरेकोद्दिष्टं पार्वणं च न स्यात्। किञ्च यदाकदाचिन्मृतस्यान्यस्य क्षयाहादिकमपि न स्यादित्यास्तां तावत्। तथा दिवोदासप्रकाशेऽपि—

महातीर्थस्य गमनमुपवासव्रतानि च।
सम्वत्सरं न कुर्वीत महागुरुनिपातने ॥

तथा—

तीर्थस्नानं महादानं परान्नं तिलतर्पणम्।
अब्दमेकं न कुर्वीत महागुरुनिपातने ॥

तथा—

स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम्।
प्रथमेऽब्दे न कुर्यात्तु महागुरुनिपातने ॥

स्नानं दूरदेशान्गत्वा तीर्थादौ, पूर्ववाक्यानुरोधात्। स्वाध्यायमपूर्वस्य ब्राह्मणोपनिषदादेरारम्भपूर्वकम्। अग्नितर्पणमग्न्याधानादिपूर्वकमग्निहोत्रहोमादि इति बहवः। यानि त्वन्यान्यपि—

सर्वेषां प्रेतकार्याणि महागुरुनिपातने।
कुर्यात्संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत् ॥
माता चैव तथा भ्राता भार्या पुत्रस्तथा स्नुषा।
एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः ॥
माता चैव सुतौ भ्राता पत्नी चैव विपद्यते।
तत्र श्राद्धानि कुर्वीत न कुर्याज्जनके मृते ॥

इत्यादीनि वचनानि तानि सर्वाणि पितृमृतौ पितृमरणसूतकमध्ये अन्यस्य मरणेऽपि तदीयनवश्राद्धादि न कुर्यादित्येतत्पराणीति धर्मप्रकाशव्याख्या। अन्यच्च—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि हि सपिण्डने ॥

दर्शश्राद्धमित्यपि पाठमपरे पठन्ति। अस्यापवादः—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।

प्रथमेऽब्दे तु कुर्वीत यदि स्याद्भक्तिमान्सुतः ॥ इति ।

अत्र कश्चिद्भक्तिशब्देन भक्त्याख्यं श्राद्धं श्राद्धे देवतात्वसम्पादकं तद्वान् तत्कृतवानित्याह । तदेतन्महासाहसपूर्वकमपूर्वार्थिनां प्रतारणेनात्मनो धर्मशास्त्राभिनिवेशप्रकाशनमेव । यतः सर्वदेशीयशिष्टपरिगृहीतनिबन्धापरिगृहीतेऽपि वचनेऽपूर्वव्याख्याकल्पनमिति । गयायां पिण्डदानं तु सपिण्ड्यान्तेऽस्याब्दमध्येऽपि कार्यमित्युक्तं दिवोदासप्रकाशे—

सपिण्डीकरणं कृत्वा गयां गत्वा च धर्मवित् ।
एकोद्दिष्टानि कुर्वीत साग्निर्वाऽनग्निमानपि ॥

अथ प्रागुक्तेऽपि नान्दीश्राद्धे ग्रन्थान्ते मङ्गलार्थं पुनः किञ्चिद्विचार्यते । बह्वृचानां नान्दीश्राद्धे मात्रादीनामानुलोम्येन क्रम उत प्रातिलोम्येनेति ? तत्रानुलोम्येनेति प्राप्तम्, चोदकानुग्रहात् ।

माता पितामही चैव सम्पूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥

इत्याश्वलायनवचनाच्च । न च मात्रादिस्वरूपविधिपरेऽस्मिन् वाक्ये अवर्जनीयतया क्रमोक्तिः उभयपरत्वे वाक्यभेदादिति वाच्यम् । प्राप्तत्वेन स्वरूपविधानानभ्युपगमात् । न च परिशिष्टकारिकाशौनकादिप्रयोगेषु त्रिदैवत्यत्वोक्तेः

मातृपूर्वान्पितॄन् पूज्य ततो मातामहानपि ।
मातामहीस्ततः केचिद् युग्मा भोज्या द्विजातयः ॥

इति चतुर्विंशतिमते द्वादशदैवत्यत्वोक्तेश्च तत्परिसंख्यार्थमेवेदमिति वाच्यम्, तस्यास्त्रिदोषत्वात् । न च पाठक्रमो न विधेयो नापि वाक्यार्थो अपदार्थत्वादिति वाच्यम्, तस्य 'शौचाचारांश्च शिक्षयेत्' इत्यादि स्मार्तस्वाध्यायविधिविहितत्वात् ।

अत एव कत्यायनीये प्रयोगवचने 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्ताम्' इति।

तथा शौनकीयेऽपि—

तत्रेदं तेऽर्घ्यमित्येष पितृनामपदादिकः।
पितामहार्थविप्रेभ्यो दत्त्वाऽर्घ्यं च यथा पुरा॥
प्रपितामहशब्दादिमिदं तेऽर्घ्यमितीरयेत्।

इत्यादीन्यानुलोम्यविधिलिङ्गान्यपि सङ्गच्छन्ते। एतदेवाभिप्रेत्य भगवान् प्रयोगपारिजातोऽप्येवमाह 'तस्मादानुलोम्येन क्रमः' इति। अत्रोच्यते, न तावदत्रातिदेशेनानुलोम्यक्रमसिद्धिः, तस्योपदेशेन बाधितत्वात्। तथाहि—

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्।
नाम सङ्कीर्तयेद्विद्वानन्यत्रापितृपूर्वकम्॥

इति वृद्धवसिष्ठेन। तथा—

वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते।

इति स्मृत्यर्थसारेण। तथा—

प्रपितामहादि मात्रन्तं तथा वर्गद्वयेऽपि च।
नान्दीश्राद्धेषु सर्वत्र केचिदाहुर्मनीषिणः॥

इति प्रयोगसाराश्वलायनसर्वस्वकृत्यरत्नाकरप्रभृतिभिश्च प्रातिलोम्यक्रमस्यैवोक्तत्वात्स एव शास्त्रार्थः। न च वासिष्ठं शाखान्तरविषयमिति वाच्यम्, 'वासिष्ठं बह्वृचैरेव' इति होलाकाधिकरणे वार्त्तिककारैरुक्तत्वेन तदयोगात्। अथाश्वलायनवाक्येन तत्सिद्धिरिति मतं, तत्रापि तस्य पाठमात्रदर्शनेन पाठक्रमस्य च क्लेशकल्प्यत्वेन तत्परत्वायोगात्। तथात्वेऽपि वा तस्य साक्षाद्वसिष्ठस्मृत्युक्तश्रौतक्रमविरोधे क्रमकोपाधिकरणन्यायेन बाध्यत्वात्। यथा ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णात्याश्विनं गृह्णातीतिपाठक्रम "आश्विनो दशमो गृह्यते" इति श्रौतक्रमेण बाध्यत

इति । किञ्च पाठमात्रस्य क्रमकल्पकत्वे—

मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥

इति मात्स्यवचने विश्वेषां देवानामन्ते पाठादन्त एव पूजा स्यात् । तस्मादाश्वलायनवाक्यं नवसंख्यामात्रविधिपरमेव' न क्रमपरम् । तथा सति च "तदिदमेके मातॄणां पृथक्कुर्वन्त्यथ पितॄणां ततो मातामहानाम्" इति त्रयमिच्छन्ति । तथा—

मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥

इत्यादिपरिशिष्टादिवाक्यैः सहैकमूलकल्पनालाघवमपि । यद्वा परिशिष्टादिवाक्यैकमूलकल्पनालाघवादेव मात्रादिश्राद्धत्रयस्य क्रमविधायकमस्तु । न च वसिष्ठवाक्यं प्रपितामहपूर्वकत्वोक्त्या त्रिदैवत्यमात्रे प्रातिलोम्यविधायकमितिवाच्यम् । न वदैवत्येऽपि 'प्रपितामह्यादिमात्रन्तम्' इति वाक्येन प्रातिलोम्यस्योक्तत्वेन तस्योपलक्षणपरत्वात् । अन्यथा शौनककारिकादिभिस्त्रिदैवत्ये आनुलोम्यक्रमस्यैवोक्तत्वेन तैस्सहाष्टदोषदुष्टविकल्पापत्तेः, मूलान्तरकल्पनाक्लेशापत्तेश्च । एतेन शौनककारिकादिविरोधोऽपि प्रत्युक्तः । तेषां त्रिदेवतात्वपक्षे तथा क्रमविधायकत्वात् । यत्तु कात्यायनीये प्रयोगवचने तथा क्रमविधानं, तद्वाजसनेयिविषयमिति । यच्च भगवता प्रयोगपारिजातेनानुलोम्यमाश्रितं तदभ्युपगमाभावादेव न शिष्यबुद्धिपरीक्षार्थं न वस्तुतः । अत एव वासिष्ठवाक्यस्य विवाहप्रकरणे पित्रादीनां प्रातिलोम्याश्रयणेन स्वशाखाविषयत्वमाविष्कृतम् । तस्य शाखान्तरविषयत्वे तदसंगतं स्यात् । न च वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्रायेत्यादिपरि-

शिष्टादेव तत्र प्रातिलोम्यसिद्धिर्न वसिष्ठवाक्यादिति वाच्यम् । उभयोः स्वातन्त्र्येण विधायकत्वादेकार्थस्मृतिद्वयवाक्यवत्तद्विधाने विनिगमकाभावात् । नचैवम्—

पुत्रा यस्य प्रपौत्राय नप्त्रेऽस्यामुकगोत्रिणे ।
अस्मा अमुकगोत्राय पुत्रा पौत्रस्य नप्त्रिका ।

इत्यादिकारिकाविरोध इति वाच्यम् । आर्षपरिशिष्टविरोधे पौरुषेय्यास्तस्या दुर्बलत्वात् परिशिष्टस्य श्रुतिमूलकत्वेन स्मृतिमूलिकायास्ततः प्राबल्याच्च । न च–'नान्दीमुखे विवाहे वा' इत्यनेन नान्दीमुखशब्देन महालयाङ्गं नान्दीमुखमेवोच्यते । तेन तत्रैव तादृशक्रमविधानमिति वाच्यम् । वासिष्ठस्य तत्परत्वेऽपि तस्य वृद्धिश्राद्धशब्दवाच्यत्वेन स्मृत्यर्थसारीयस्य तत्परत्वासम्भवात् । उक्तरीत्या वाक्यान्तरवशादुपलक्षणतया नवदैवत्ये तादृशक्रमविधानेन त्रिदैवत्ये तस्मिन् तादृशक्रमविधानसम्भवाच्च । किञ्च उभयपरतयाऽस्पष्टस्य सामान्यस्य नान्दीमुखशब्दस्यैकमात्रपरतया स्पष्टेन विशेषेण वृद्धिश्राद्धशब्देनोपसंहारात् । अत एव वासिष्ठस्य तत्परत्वेन स्मृत्यर्थसारीयस्य चाभ्युदयिकपरत्वेन व्यवस्थेत्यपि न शङ्कनीयम् । नचैतानि वचनानि निर्मूलान्येवेति वाच्यम् । तेषां समूले हेमाद्रि–प्रयोगपारिजात–स्मृत्यर्थसार–प्रयोगसारा–ऽऽश्वलायनसर्वस्व–कृत्यरत्नाकर–हरनाथ–संस्कार–चन्द्रिकाप्रभृतीनां निबन्धानां प्रतिभूत्वेनास्मद्भारापनयनात् । तदेवं जाग्रम्मूलायां सर्वदेशीयाश्वलायनानामनादिशिष्टाचारपरम्परायां यदाधुनिकानामसत्पथप्रवर्तनं, तद्धर्ममर्मनिकर्तनेनात्मकृतित्वख्यापनमेवेत्युपेक्षणीयम् । तस्मात्सिद्धो बह्वृचानां नान्दीश्राद्धे मात्रादीनां प्रातिलोम्येन तत्क्रम इत्यलमतिप्रपञ्चेन ॥

## अथ पार्वणादिश्राद्धभोजने प्रायश्चित्तमुच्यते ।

तत्र भरद्वाजः—

भुक्तं चेत्पार्वणश्राद्धे प्राणायामान् षडाचरेत् ।

उपवासास्त्रिमासादिवत्सरान्तं प्रकीर्तितः ॥
प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने ।
असरूपे स्मृते नक्तं व्रतपारणके तथा ॥
असरूपे गुणशीलादिभिरसमाने ।

तथा-

द्विगुणं क्षत्रियस्यैतत्त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥ इति ।

एतदापद्विषयमामश्राद्धविषयमकामविषयं वा । एवमुत्तरत्रापि अल्पप्रायश्चित्तानि योजनीयानि । अधिकप्रायश्चित्तानि कामकारे अनापद्विषये वा योज्यानि । आपदि नवश्राद्धादिभोजने विष्णूक्तम् —

प्राजापत्यं नवश्राद्धे पादोनं चाऽऽद्यमासिके ।
त्रैपक्षिके तदर्द्धं तु पञ्चगव्यं द्विमासिके ॥ इति ।

अत्राशक्तस्य हारीतेनोक्तम्—

एकादशाहे त्र्यहं तु भुक्त्वा सञ्चयने तथा ।
उपोष्य विधिवद्धुत्वा कूष्माण्डैर्जुहुयाद् घृतम् ॥ इति ।

अनापद्यपि स एव—

चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके ।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते ॥

मिश्रकं=प्रथमसम्वत्सरभवं श्राद्धमिति केचन । पुराणेषु-संवत्सरानन्तरभाविश्राद्धेषु । पुराणेष्विति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वपरं, तत ऊर्द्ध्वं न दोष इत्यर्थः । चतुर्थस्य शुद्ध्यर्थत्वात् ।

तथाच दिवोदासनिबन्धे—

सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत् ।
तावदेव न भोक्तव्यं क्षयेऽहनि कदाचन ॥

अत एव दर्शापरपक्षादिश्राद्धे वर्षत्रयादर्वागपि भोजने प्रत्यवायो नास्तीति ।

स्मृत्यन्तरेऽपि—

सप्तत्रिंशच्च यो मासान् श्राद्धे भुङ्क्ते तमोहतः ।
स पङ्क्तिदूषितः पापः प्रेताशी च भवेत्तु सः ॥

श्राद्धकाशिकायामपि—

मृतस्याहनि सम्प्राप्ते यावदब्दचतुष्टयम् ।
बहिश्राद्धं प्रकुर्वीत न कुर्याच्छ्राद्धभोजनम् ॥
प्रथमेऽस्थीनि मज्जा च द्वितीये मांसभक्षणम् ।
तृतीये रुधिरं प्रोक्तं श्राद्धं शुद्धं चतुर्थकम् ॥ इति ।

अपरे तु मिश्रकं प्रथमतो दीयमानमाद्यं श्राद्धमिति । "चान्द्रायणं नवश्राद्धे" इत्येतत्प्रथमनवश्राद्धादिविषयम् । अथवा नवश्राद्धे चान्द्रायणं क्षत्रियश्राद्धविषयं वा । द्वितीयनवश्राद्धादिषु तु षट्त्रिंशन्मतोक्तम्—

प्राजापत्यं नवश्राद्धे पादोनं चार्धमासिके ।
त्रैपाक्षिके तदर्द्धं स्यात्पादोर्द्धमासिके तथा ॥
पादोनं कृच्छ्रमुद्दिष्टं षण्मासे च तथाऽऽब्दिके ।
त्रिरात्रं चान्यमासेषु प्रत्यब्दं तदहः स्मृतम् ॥ इति ।

'त्रैपाक्षिके तदर्द्धं स्यात्' इत्यादि कामकारविषयम् । 'षण्मासे च तथाऽऽब्दिके' इत्येतत्प्रथमाब्दिकविषयम् । 'प्रत्यब्दं तदहः' इत्येतद्द्वितीयाब्दिकविषयम् । एतच्च ब्राह्मणविषयम् । क्षत्रियादिश्राद्धभोजने तु तत्रैव—

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम् ॥
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् ।
वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ।

शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् ॥
सार्द्धचान्द्रायणं मासि त्रिपक्षे त्वैन्दवं स्मृतम् ।
मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम् ॥ इति ।

शङ्खः—

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
पक्षत्रयेऽपि कृच्छ्रः स्यात् षण्मासे कृच्छ्र एव तत् ॥
आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके ।
अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा ॥ इति ।

एवंविधान्यन्यान्यपि गुरुलघुप्रायश्चित्तानि कामाकामजातिशक्तिस्तेनपातितक्लीबाद्यपाङ्क्तेयश्राद्धभोजनसर्पहतादि श्राद्धभोजनाविषयविशेषापेक्षया योज्यानि ।

तथा भरद्वाजः—

चण्डालादुदकात्सर्पाद् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥
पतनानाशकैश्चैव विषोद्बन्धादिकैस्तथा ।
भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः ॥

तथा—

अपाङ्क्तेयान्यदुद्दिश्य श्राद्धमेकादशेऽहनि ।
ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेत् ॥ इति ।
आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति ।
सङ्कल्पिते तथा भुक्ते त्रिरात्रं च क्षणं भवेत् ॥ इति ।

कामतो ब्रह्मचारिणो नवश्राद्धादिभोजने बृहद्यमोक्तम्—

मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव च ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ इति ।

अकामतोऽपि तेनैवोक्तम्—

मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।

त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति ।

आमश्राद्धे त्वर्धं सर्वत्र ।

आमश्राद्धे भवेदर्धं प्राजापत्यं तु सर्वदा ॥

इति षट्त्रिंशन्मते स्मरणात् । अनुक्तप्रायश्चित्तामावास्यादिश्राद्धभोजनेषु विशेषमाहोशनाः—

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः ।
ततः सन्ध्यामुपासीत शुद्ध्येत्तु तदनन्तरम् ॥

अस्ति क्षत्रियवंशभूषणमणिर्भूमीशचूडामणिः
शत्रूणां द्युमणिः प्रतापनविधौ धर्मारणिः कर्मसु ॥
कीर्तीनां सरणिर्बुधाब्जतरणिः प्रत्यर्थिपृथ्वीभृतां
संसारार्णवतारणैककरणिः सङ्कल्पचिन्तामणिः ॥१॥

स जयति परमानन्दकीर्त्या यस्यामृतेन पूर्णाशाः ।
त्रिदशाः सुरारिवैरं सुधाकृते नैव तन्वते स्वैरम् ॥२॥

'धर्माधिकारि' कुलकैरवचन्द्रकान्त-
श्रीरामपण्डितसुतेन विनायकेन ।
आदेशतोऽस्य विहिता सुमनोऽभिरामा
श्री 'श्राद्धकल्पलतिका' नितरां प्ररूढात् ॥ ३ ॥

अङ्कुरिता मुनिवाक्यैर्व्याख्यातॄणां द्विपत्रितासूक्तैः ।
पल्लविता कृतिनेयं कल्पलता वाञ्छितं दिशतु ॥४॥

यत्किञ्चिद्दूषणं स्यादिह तदपि बुधैर्भूषणं संविधेयं
दोषोद्धाराय तेषामधिजगति पुनर्जन्म धात्रा कृतं यत् ।
किं वा निन्द्यं न शम्भुर्गरलमहिगणात् भस्म शूलं कपालं
धत्ते भूषार्थमन्यैस्तदपि किमु गिरा पूज्यते न श्रुतीनाम्॥५॥

सन्तोऽपि संतोषमपास्य दूरं कृतिं मदीयां यदि दूषयेयुः ।
हानिस्तदा स्यात्कियती ममात्र स त्वं पुरस्तात्परिहास्यते तैः॥६॥

परमानन्ददानाम्बुनिषेकैरनुवासरम् ॥
'श्राद्धकल्पलता' रूढा देयादार्थिकुलेप्सितम् ॥७॥

इति श्री महाराजाधिराज सहागिलान्वयैकभूषणपरमानन्दादिष्ट "धर्माधिकारि" रामपण्डितात्मजविनायक कृतायां श्राद्धकल्पलतायां नवश्राद्धनिरूपणस्तबकः पञ्चमः समाप्तः ॥
श्रीएकवीरा देवतार्पणमस्तु ।

इति श्राद्धकल्पलता समाप्ता ।

शुभं भूयात् ।

८२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दः-संग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र (१) भोजवृत्तिः, [२] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। २ से ५ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

८५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

८६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमोभागः। [ काव्यविभाग १३ ] रु० ०—८

८७ नागानन्दनाटकम्। श्रीहर्षदेवप्रणीतम्। काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम्। [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम्। महाकवि श्रीकालीदास विरचितम्। मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायणशास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम्। [ काव्य०४ ] रु०—८

८९ जागदीशीव्यधिकरणम्। न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम्। ( न्यायविभागे २ ) रु० २—८

९० काव्यकल्पलतावृत्तिः। श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता। ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका। श्रीरामाश्रमप्रणीता। श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता। पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया शब्दादिकोषेण च सहिता। (व्या० वि० ११) पूर्वार्द्धम्। रु० २—८ उत्तरार्द्धं। रु० २-८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम्। साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम्। श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम्। ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः। श्रीजगदीशतर्कालङ्कारकृताः। न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः। ( न्याय वि० १३) रु० १—४

९५ (१) संस्कारदीपकः। म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः। गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः। (कर्म० वि० ८)रु० २—०

९५ (२) संस्कारदीपकः। " " " विवाह-गर्भाधानादिकेशान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः। " रु० ३—०

९५ (३) संस्कारदीपकः। " तुलादानादि-मूलशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः। " रु० ३—०

९६ वर्षकृत्यदीपिका। कालनिर्णयव्रतोद्यापन सहितः। म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः। ( कर्म्म० वि ९ ) रु० ३-८

९७ श्रौतसूत्रम्। श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम्। (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा। महाकविश्रीत्रिविक्रमभट्टविरचिता। विषमपद-प्रकाशाख्यव्याख्यया सहिता। भावबोधिनी टिप्पणी सहिता। (का० वि०१६) रु० १—४

९९ श्रीब्रह्मसूत्रम्। श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम्। ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः। सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्त्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपलकृतः। ( छन्दः शास्त्र वि० ४) रु० २—८

१०१ सिद्धान्तलक्षणम्। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम्। (न्याय विभागे ४) ) रु० १—८

१०२ वेदभाष्यभूमिकासंग्रहः। ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः )। [ वेद० वि० ५ ] रु० २—८

१०३ माधवीयधातुवृत्तिः। श्रीमत्सायणाचार्यविरचिता। ( व्या० वि० १२) रु० ५—०

१०४ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्। [कर्म०वि० ११] रु० ४—०

१०५ ताण्ड्यमहाब्राह्मणम्। सायणाचार्यविरचितभाष्यसहितम्। ( प्रथमोभागः ) ( वेद वि० ६ ) रु० ५—०

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [ न्या० वि० १५ ] रु० ३—०

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। ( तन्त्रशा० वि० १ ) रु० ५—०

१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। ( वेद० वि० ७ ) रु० २—०

१०९ शब्दशक्तिप्रकाशिका। श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता। श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रि कृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता। (न्या वि० १६) रु० ४—८

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचित, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रवि रचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योति-तम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्य दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रवेश"नामिकया भूमिकया च संवलितम्, ( योग वि० ३ ) रु० ४—०